# 'ऋग्विधानम्'

पञ्चनदीये विश्वविद्यालये संस्कृतसाहित्यान्तर्गतनीति-
साहित्येतिहासरचनाकार्ये नियुक्तेन एम. ए., एम.,
ओ. एल. इत्युपाधिभूषितेन जगदीशशास्त्रिणा
सम्पादितम्,

ग्रन्थारम्भे समर्पणभूमिकाभ्यां ग्रन्थान्ते च ग्रन्थपद्य-
पादानामकारादिक्रमेण ग्रन्थनिर्दिष्टानामृग्वेदसूक्त-
मन्त्राणां च संख्याक्रमेण सूच्या
संवर्द्धितम्,

पण्डितश्रीकृष्णदीक्षितप्रबन्धेन 'बाम्बे मशीन'
इत्येतन्नाम्नि मुद्रणालये मुद्रापयित्वा
प्रकाशितम्
१९९७

# समर्पणम्

विद्यासङ्गः सुहृदिव यमन्वगात्पांसुकेलितः प्रभृति ।
यस्याऽवदातमेधा धात्रीवाऽधाद्विवेकपरिपोषम् ॥ १ ॥
यस्याऽऽबाल्यात् प्रीतिः प्रवर्तते हन्त देवभारत्याम् ।
आर्याऽऽचारविचारप्रगुणायां संस्कृतौ च भारत्याम् ॥२॥
वेत्ता बहुभाषाणां परमार्थरहस्यविन्निरुक्तगिराम् ।
संस्कर्ता चोद्धर्ता निरुक्तशास्त्रस्य यस्तरीस्तस्मै ॥३॥
एम्. ए., डी. फिल्., आफिसर् एकैडमीत्याद्युपाधिभूषाय ।
पञ्जाबविश्वविद्यालयस्य संस्कृतविभागमुख्याय ॥४॥
संस्कृतसाहित्यस्याऽऽचार्याय दिगन्तकान्तकीर्तिजुषे ।
प्राक्तत्त्वेष्वनुसन्धां प्रयुञ्जते तत्कृतां सहायकृते ॥५॥
वेदे कृतश्रमाय श्रीलश्रीलक्ष्मणस्वरूपाय ।
अभिनवसंस्कृतिरेषा तदीयशिष्येण ऋग्विधानस्य ॥६॥
तत्प्रोत्साहितमनसा ध्यायं ध्यायं तदीयगुणविभवान् ।
उपह्रियतेऽतनुविनयं मयका जगदीशविप्रेण ॥ ७ ॥

# भूमिका

ऋग्विधानं नाम शार्मण्यदेशवासिना श्रीमेयरविदुषा रोमनलिप्यां प्रकाशितपूर्वम्, अधुनाऽस्माभिर्भारतीयविद्वज्जनहिताय नागरीलिप्यां सम्पाद्य अनुक्रमणिकाभ्यां च परिवर्द्ध्य प्रकाशितम्।

अस्य कर्तृत्वविषये नात्रास्ति किमपि सुनिश्चितम्। "कर्मणामृषिदृष्टानां विधिं प्रोवाच शौनकः।" इत्यस्य प्रथमाध्याये द्वितीये पद्य उक्तम्। नैतावताऽस्य ग्रन्थस्य शौनकोक्तत्वं प्रतिपद्यते। कर्मणामिति तु सामान्यं वचः। किन्त्वत्रैव प्रथमे पद्ये 'विवक्षुरस्म्यृग्विधानं पुराणम्' इत्युक्तेर्ऋग्विधानविषयस्य पुराणता, अस्य च ग्रन्थस्य पुराणग्रन्थानुवर्तिता इत्युभयं प्रतीयते। अपिच क्वचिदध्यायसमाप्तौ 'नमः शौनकाय नमः शौनकाय इति वचनादस्य शौनककर्तृत्वं व्याहतं भवति। नहि कोपि मेधावी स्वात्मानं प्रशंसितुं प्रभवति किमुत प्रणन्तुम्। अपिच तृतीयेऽध्याये पद्यमिदं लभ्यते—

"इत्येवमुक्तः पुरुषस्य विष्णोरर्चाविधिर्विष्णुकुमारनाम्ना।
मुक्त्यैकमार्गप्रतिबोधनाय दृष्ट्वा विधानं त्विह नारदोक्तम्॥" (३. २३५)

इत्यतः पुरुषसूक्तविधेर्विष्णुकुमारप्रोक्तत्वं विष्णुकुमारस्य च नारदोक्तविधानानुवर्तित्वं प्रतिपद्यते। किन्तु नैतावता तस्य कृत्स्नग्रन्थकर्तृत्वं सिद्ध्यति।

ऋग्विधानस्यार्षत्वं स्वतः सिद्धम् 'ऋग्विधानं पुराणं पुरा दृष्टमृषिभिर्मन्त्रकृद्भिः' इति ग्रन्थकृदुक्तेः। अत्र विधेः पुराणत्वादार्षत्वाच्च कर्तृत्वानपेक्षा स्पष्टैव। पुराणमार्षं विधिं पद्यैः प्रतिपादयितुः स्वसंज्ञाविष्करणं नाभिप्रेतमिति प्रतीयते।

किन्त्वेकस्या एवर्चः कुत्रचिद्भिन्नो विधिः फलं च दृश्यते। अत्र ऋग्विधाने दर्शित ऋचां विधिः फलं च मुम्बईप्रकाशितादृग्विधानाद्भिन्ने एव। तथाहि अत्र 'मुञ्चामि त्वा हविषा' इत्यस्य मन्त्रस्य प्रयोजनं यक्ष्मापकर्षणम्; विधिस्तु सुसमिद्धेऽग्नावाज्येन हविर्दानम्। अन्यत्र तु शतायुष्यलाभः फलम्; शिवस्थाने त्रिवारं जप इति विधिः। एवमेवात्र 'अमीवहा' इति सूक्तस्य फलं निशि प्रस्वापनम्; सम्बाधे विषमे दुर्गे बद्धस्य

निर्गतस्य पलायमानस्य गृहीतस्य तस्करैर्वा निरुद्धस्य मोचनार्थेऽस्य प्रयोग: । अन्यत्र तु शिवालयेऽस्यायुतपाठात् कुष्ठरोगनाश: स्वर्णावर्णप्राप्तिश्चेति । तदिदं द्वयोर्ग्रन्थयोर्निर्दिष्टं भिन्नविधित्वं भिन्नफलत्वं च ऋचां नैकविधित्वं नैकफलत्वं च प्रतिपादयति । अस्त्येकस्यापि मन्त्रस्य विधिभेदेन फलभेद: । सत्यप्येवं भेदे नैतयोरार्षत्वे काचिदप्यापत्ति: ।

द्वयोरप्येतयोर्ऋग्विधानयोरस्यैव ऋग्विधानस्य बहुत्रोद्धृतत्वेन प्रमाणत्वं दृश्यते। नीतिमञ्जरीकर्त्रा द्याद्विवेदेन नीतिमञ्जरीभाष्येऽस्यैव ग्रन्थस्य कतिपयानि पद्यानि प्रमाणत्वेनोपन्यस्तानि ।

अत्रस्था: केचिदार्षप्रयोगा एतस्य ग्रन्थस्य पुराणतां व्यञ्जयन्ति । तद् यथा— नमस्कृत्वा ( १. १$^{2}$ ), पश्येत ( १. ३२$^{2}$ ), छाद्य ( १. ६०$^{4}$ ), गच्छेत ( २. १२६$^{1}$ ), शङ्केत् ( २. १४२$^{2}$ ), लभेत् ( ४. १५$^{2}$ ), प्रतिमुञ्चेत ( ४. ३६$^{1}$ ), सर्वान्कामानवाप्यते ( ४. ४५$^{2}$ ), निमज्जित्वा ( ४. १२२$^{3}$ ) इति ।

अत्रेदं व्यक्तिगतं किञ्चिदावश्यकमवधेयम्—एतद्ग्रन्थस्य सम्पादनमुद्रणादिकार्यं विक्रमराज्यत: सप्तोत्तरनवत्यधिकैकोनविंशतिशततमे वर्षे भाद्रपदे मासे संवृत्तम् । तत्र ग्रीष्मावकाशेषु आभाद्रपदम् एकान्तत एतन्नियोगाश्रयणात्कार्यसमाप्तिस्सुलभैवाभूत् । गुरुमप्येतत्कार्यभारं सामोदमुद्वोढुर्मम गुरवस्तत्रभवन्तो विद्याव्यसनिन: पञ्चनद-विश्वविद्यालयाधिकृतसंस्कृतविभागाध्यक्षा: एम. ए. (पंजाब), डी. फिल. (आक्सफोर्ड), आफिसर् डी एकैडेमी ( फ्रान्स ), इत्याद्युपाधिभूषिता आचार्यवरा श्रीलक्ष्मणस्वरूप-महोदया एव परमादर्श इति निवेदयति

जगदीशशास्त्री ।

---

# ऋग्विधानम् ।

## प्रथमोऽध्यायः ।

ओं नमो गणेशाय । ओं नम ऋग्वेदाय ॥

स्वयम्भुवे ब्रह्मणे विश्वगोप्त्रे नमस्कृत्वा मन्त्रदृग्भ्यस्तथैव ।
विवक्षुरस्मदृग्विधानं पुराणं पुरा दृष्टमृषिभिर्मन्त्रदृग्भिः ॥ १ ॥
मन्त्रेभ्यो मन्त्रदृग्भ्यश्च समाम्नायानुपूर्वशः ।
कर्मणामृषिदृष्टानां विधिं प्रोवाच शौनकः ॥ २ ॥
ऋषिभिर्विविधा मन्त्रा दृष्टा दृष्टप्रयोजनाः ।
प्रयोजनाय चोद्दिष्टास्तस्मिंस्तस्मिन्प्रदर्शिताः ॥ ३ ॥
नानार्थानि च कर्माणि शान्तिपुष्ट्याश्रयाणि च ।
सिद्धयश्च तपोमूलाः श्रद्दधानस्य कुर्वतः ॥ ४ ॥
स्तुत्यादयो ये विकाराः प्रदिष्टास्तथार्थवादा ऋक्षु सूक्तेषु चैव ।
यैर्यैः कामैर्ऋषिभिर्देवताश्च तुष्टूष्यन्ते तान् शृणुष्वोच्यमानान् ॥ ५ ॥
आयुः स्वर्गो द्रविणं सूनवश्च चतुर्विधं प्रोक्तमाशास्यमग्रे ।
अन्ये कामाः शतशः संप्रदिष्टाः संस्तुवद्भिर्ऋषिभिर्देवताश्च ॥ ६ ॥
सिद्धा मन्त्रा विधिना ब्राह्मणस्य फलं यच्छन्ति विधिवत्प्रयुक्ताः ।
सत्यं तेषां साधनं संयमश्च शमस्तितिक्षानसूया दमश्च ॥ ७ ॥
तस्माद् द्विजः प्रशान्तात्मा जपहोमपरायणः ।
तपस्यध्ययने युक्तो भवेद् भूतानुकम्पकः ॥ ८ ॥
क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः ।
धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ॥ ९ ॥
तपसा स्वर्गमाप्नोति तपसा विन्दते महत् ।
तपोयुक्तस्य सिद्ध्यन्ति कर्माणि नियतात्मनः ॥ १० ॥
विद्वेषणं संवननं विषघ्नं रोगनाशनम् ।
येन येनार्थमृषिणा यदर्थं देवताः स्तुताः ॥ ११ ॥
स स कामः समृद्धिश्च तेषां तेषां तथा तथा ।
तानि कर्माणि वक्ष्यामि विधानानि च कर्मणाम् ॥ १२ ॥

पुरश्चरणमादौ तु कर्मणां सिद्धिकारकम् ।
स्वाध्यायाभ्यसनस्यादौ प्राजापत्यं चरेद् द्विजः ॥ १३ ॥
केशश्मश्रुलोमनखान् वापयित्वाप्लुतः शुचिः ।
तिष्ठेदहनि रात्रौ तु शुचिरासीत वाग्यतः ॥ १४ ॥
सत्यवादी पवित्राणि जपेद् व्याहृतयस्तथा ।
ओंकाराद्यास्तु ता जप्त्वा सावित्रीं च तदित्यृचम्[1] ॥ १५ ॥
आपो हि ष्ठेति[2] सूक्तं तु शुद्धवत्यो[3]घमर्षणाम्[4] ।
शंवत्यः[5] स्वस्तिमत्य[6]श्च पावमान्य[7]स्तथैव च ॥ १६ ॥
सर्वत्रैतत् प्रयोक्तव्यमादावन्ते च कर्मणाम् ।
आ सहस्रादा शताद्वा दशान्तमथवा जपेत् ॥ १७ ॥
ओंकारं व्याहृतीस्तिस्रः सावित्रीमथवायुतम् ।
तर्पयित्वाद्भिराचार्यान् ऋषींश्छन्दांसि देवताः ॥ १८ ॥
प्रपद्येत विरूपाक्षं रौद्रं मन्त्रगणं जपेत् ।
अनार्यैर्नच भाषेत न शूद्रैर्नापि गर्हितैः ॥ १९ ॥
न रजस्वलया नार्या पतितैर्नान्त्यजैर्नृभिः ।
न देवब्राह्मणद्विष्टैर्नाचार्यगुरुनिन्दकैः ॥ २० ॥
न मातृपितृविद्विष्टैर्नावमन्येत कञ्चन ।
मङ्गलाचार्ययुक्तः स्यात् त्रिरह्नोभ्युपयादपः ॥ २१ ॥
अन्ते द्वादशरात्रस्य स्थालीपाकं प्रकल्पयेत् ।
अग्नये चाथ सोमाय तृतीयाञ्च तयोः सह ॥ २२ ॥
वैश्वदेवीं च रौद्रीं च जुहुयादुत्तरे ततः ।
अवसानस्य पतये तथानुमतयेपि च ॥ २३ ॥
धन्वन्तरय इत्यन्यां गन्धर्वाप्सरसामपि ।
दशमी ब्राह्मणस्पत्या परा तु ब्रह्मणे स्मृता ॥ २४ ॥
सरस्वत्यै तथा विष्णोरन्त्या सौविष्टकृत्यपि ।
आज्याहुतय एवादौ स्थालीपाके हुते पुनः ॥ २५ ॥
हुत्वाग्निं तर्पयेद्विप्रान् पितृभ्यश्च प्रकल्पयेत् ।
ततः शेषं विधानेन शुचिर्भुञ्जीत वाग्यतः ॥ २६ ॥

1. ऋग्वेद ३. ६२. १०. 2. ऋ० १०. ९. 3. ऋ० ८. ८४. ७-९ (=८. ९५. ७-९). 4. ऋ० १० १९०. 5. ऋ० ७.३५. 6. ऋ० ५. ५१. ११-१५. 7. मण्डल ९.

कृच्छ्राणामेष सर्वेषां विधिरुक्तोऽनुपूर्वशः ।
प्राजापत्यातिकृच्छ्रस्य तथा सान्तपनस्य च ॥२७॥
पराकस्य च कृच्छ्रस्य विधिश्चान्द्रायणस्य च ।
एकेन शुद्धिमाप्नोति द्वाभ्यां पापैः प्रमुच्यते ॥२८॥
त्रिभिः सिद्ध्यन्ति मन्त्राश्च मुच्यते चोपपातकैः ।
चतुर्भिर्भ्रूणहत्यायास्तथैवायाज्ययाजनात् ॥२९॥
पञ्चभिः पातकैः सर्वैर्दुष्कृतैश्च प्रमुच्यते ।
तप्तकृच्छ्रेण सर्वाणि पापानि प्रतिबाधते ॥३०॥
चान्द्रायणं सहाद्यन्तमेभिः कृच्छ्रैस्समं स्मृतम् ।
त्रिभिश्चान्द्रायणैः पूतो ब्रह्मलोकं समश्नुते ॥३१॥
अष्टाभिर्देवताः साक्षात् पश्येत वरदास्तथा ।
छन्दांसि दशभिर्ज्ञात्वा सर्वान्कामान्त्समश्नुते ॥३२॥
त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परं च नाश्नीयात् प्राजापत्यं चरन् द्विजः ॥३३॥
एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणि पूर्ववत् ।
त्र्यहं चोपवसेदन्त्यमतिकृच्छ्रं चरन् द्विजः ॥३४॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकरात्रोपवासश्च कृच्छ्रः सान्तपनः स्मृतः ॥३५॥
एतमेव त्र्यहैर्युक्तं महासान्तपनं विदुः ।
उपवासस्तु सप्ताहं शिशुसान्तपनं स्मृतम् ॥३६॥
तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान् ।
प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः ॥३७॥
नियतस्तु पिबेदपः प्राजापत्यविधिं स्मरन् ।
यतिकृच्छ्रं वदन्त्येतद् रपसामपनोदनम् ॥३८॥
यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ।
पाराको नाम कृच्छ्रोयं सर्वपापापनोदनः ॥३९॥
एकैकं ह्रासयेत्पिण्डं कृष्णे शुक्ले च वर्धयेत् ।
उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम् ॥४०॥
एतमेव विधिं कृत्स्नमाचरेद् यवमध्यमे ।
शुक्लपक्षादिनि यतश्चरंश्चान्द्रायणव्रतम् ॥४१॥

चतुरः प्रातरश्नीयाद् विप्रः पिण्डान् कृताह्निकः ।
चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतम् ॥ ४२ ॥
अष्टावष्टौ समश्नीयात् पिण्डान् मध्यन्दिने स्थिते ।
नियतात्मा हविष्यस्य यतिचान्द्रायणव्रतम् ॥ ४३ ॥
यथा कथञ्चित् पिण्डानां तिस्रोशीतीः समाहितः ।
मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम् ॥ ४४ ॥
एतद्रुद्रास्तथादित्या वसवश्चाचरन् व्रतम् ।
सर्वाकुशलमोक्षाय मरुतश्चर्षुभिस्सह ॥ ४५ ॥
यावकः सप्तरात्रं तु पातव्यो नियतात्मना ।
स्थानासनत्रिषवणैर्जपता पावनानि च ॥ ४६ ॥
एकैकं सप्तरात्रेण पुनाति विधिवत्कृतः ।
त्वगसृक्पिशितास्थीनि मेदो मज्जानमेव च ॥ ४७ ॥
एकैकं सप्तरात्रं तु त्वगादीनां विशोधनम् ।
एभिर्व्रतैर्विपूतात्मा कुर्यात्कर्माण्यतन्द्रितः ॥ ४८ ॥
इष्टान्कामांस्ततः सर्वानवाप्नोति न संशयः ।
कणपिण्याकतक्राणामेकैकं शोधनं भवेत् ॥ ४९ ॥
शुद्धात्मा कर्म कुर्वीत सत्यवादी यतेन्द्रियः ।
एवंशुद्धस्य कर्माणि मन्त्रैर्वक्ष्यामि यद् यथा ॥ ५० ॥
त्रिरात्रमेवोपवसेदादितः सर्वकर्मणाम् ।
त्रीणि नक्तानि वा कुर्यात् ततः कर्म समारभेत् ॥ ५१ ॥
नित्यप्रयोगिणां चैव प्रयोगादौ व्रतं त्र्यहम् ।
उपरिष्टादुपवसेत् कृत्वा वा सान्निपातकम् ॥ ५२ ॥
आयुष्याण्येव कर्माणि मन्त्रयुक्तः समारभेत् ।
शंवत्यः स्वस्तिमत्यश्च जपेत त्रिवृत ऋचः[1] ॥ ५३ ॥
अरण्ये चोदिते सूर्ये दिशं प्राप्यापराजिताम् ।
प्राचीमथोत्तरां वापि शुचौ देशे समाहितः ॥ ५४ ॥
सवासाः सशिरस्कोऽप्सु स्नात्वाऽभ्युक्ष्य जपेद् द्विजः ।
शुद्धवत्यस्[2]तथाब्वत्यः[3] पावमान्यो[4]ऽघमर्षणम्[5] ॥ ५५ ॥

1. ऋ० ६. ११. 2. ऋ० ८. ८४. ७-९ (=८. ९५. ७-९). 3. ऋ० १०. ९. 4. ऋ० मण्डल ९. 5. ऋ० १०. १९०.

एवं त्रिराप्लुत्य शुचिः प्राणायामान्त्समाचरेत् ।
त्रीन् षडष्टौ द्वादश वा षोडशाष्टादशापि वा ॥ ५६ ॥
आ शताद्वायमेत्प्राणान् जपन् ब्रह्माघमर्षणम् ।
यावद्वा मनसस्तुष्टिस्तावत्प्राणान्त्समायमेत् ॥ ५७ ॥
यथा यथा मनस्तस्य दुष्कृतं कर्म गर्हति ।
तथा तथा शरीरं तत्तेनाधर्मेण मुच्यते ॥ ५८ ॥
प्राणायामैर्दग्धदोषः शुक्लाम्बरधरः शुचिः ।
यथाविध्युप आचम्य आरोहेद् दर्भप्रस्तरम् ॥ ५६ ॥
पवित्रपाणिः कृत्वा तु उपस्थं दक्षिणोत्तरम् ।
दिशोरेवान्तरं प्रेक्ष्यानिमिषं छाद्य चक्षुषी ॥ ६० ॥
ओंकारं व्याहृतीस्तिस्रः सावित्रीं च तदित्यृचम्[1] ।
मनसैता अनुद्रुत्य वेदादिं समुपक्रमेत् ॥ ६१ ॥
मन्द्रमेव पठेत्प्रातरुच्चैर्मध्यन्दिने पठेत् ।
उच्चैरेवापराह्णे तु सन्ध्याकाल उपारमेत् ॥ ६२ ॥
ब्राह्मे मुहूर्त्ते उत्थाय त्रिराप्लुत्य पठेद् द्विजः ।
मध्यमां वृत्तिमास्थाय न द्रुतां न विलम्बिताम् ॥ ६३ ॥
पूर्वां सन्ध्यां जपंस्तिष्ठेदुपासीत च पश्चिमाम् ।
न चान्तरा व्याहरेत विरमेद्वा कथञ्चन ॥ ६४ ॥
विरमेद् ब्राह्मणे प्राप्ते कामं तेन तु संवदेत् ।
शूद्रं दृष्ट्वैव सम्प्राप्तं नाधीयीत कथञ्चन ॥ ६५ ॥
आग्नेयं[2] सूक्तमाद्यं तु मुख्यं ब्रह्मर्षिसम्मतम् ।
रायस्पोषकरं धन्यं जपन्विप्रोर्थमाप्नुयात् ॥ ६६ ॥
ऋषिं[3] सर्वमिदं जप्त्वा सपुत्रं नियतः शुचिः ।
संहिताफलमाप्नोति ऋग्वेदस्य न संशयः ॥ ६७ ॥
एकादशगुणं ह्येतज्जपन् ब्रह्म सनातनम् ।
सर्वान्कामानवाप्नोति पापैश्च परिमुच्यते ॥ ६८ ॥
अनश्नन्त्संहितामेतां प्रातः प्रातर्दिने दिने ।
आयुर्विद्यां धनं पुत्रान् गृहांश्चाप्नोत्यनामयान् ॥ ६६ ॥

---

1. ऋ० ३. ६२. १०. 2. ऋ० १. १. 3. ऋ० १. १-११.

एतद् ब्रह्म जपन् शूद्राभ्रेदोत्सान्यांश्च तद्विधान् ।
प्रेत्याचम्योदकं पूतः पश्येद् गामग्निभास्करौ ॥ ७० ॥
मन्द्रस्तज्जपो दशगुण उपांशु स्याच्छतान्वितः ।
साहस्रं मानसं विद्यादेष जप्यविधिः स्मृतः ॥ ७१ ॥
आदावेव तु सावित्र्या कर्म कुर्वीत शान्तये ।
पुष्टये धनलाभाय पशुलाभाय भूतये ॥ ७२ ॥
एषा हि सम्मिता वेदैः सर्वब्रह्ममयी निचृत् ।
उग्रेण तपसा दृष्टा विश्वामित्रेण धीमता ॥ ७३ ॥
होमांश्च जपयज्ञांश्च नित्यं कुर्वीत चैतया ।
सर्वकामसमृद्ध्यर्थं परं ब्रह्मेदमुच्यते ॥ ७४ ॥
एषैव प्रतिलोमोक्ता पच्छः शत्रुविनाशनी ।
अक्षरप्रतिलोमेयमभिचारेषु शस्यते ॥ ७५ ॥
अक्षरप्रतिलोमेयं यस्मिन् युज्येत कर्मणि ।
तदमोघं विजानीयाद् एतद्धै ब्रह्मणो बलम् ॥ ७६ ॥
व्याघातकेध्मसमिधो अक्षरप्रतिलोमया ।
जुहुयात्सार्षपं तैलं बैभीतककृता स्रुचः ॥ ७७ ॥
य इच्छेत्पीडनं शत्रोरपि वोच्चाटनं पुनः ।
पच्छः सम्पीडयेच्छत्रून् वर्णशश्च प्रमापयेत् ॥ ७८ ॥
ऋग्वेदाद्यस्य सूक्तस्य विधिं वक्ष्याम्यतः परम् ।
यथा ऋषिर्मधुच्छन्दाः कर्मैतेनाकरोत् पुरा ॥ ७९ ॥
शिरसा धारयेदग्निं नियतः परिवत्सरम् ।
चतुर्थप्राणकालीयो हुतशिष्टमदन् हविः ॥ ८० ॥
जुह्वत्त्रिरुपतिष्ठेत सत्यवादी दिने दिने ।
व्रतकाले तु सम्प्राप्त आग्नेयं निर्वपेच्चरुम् ॥ ८१ ॥
अनग्नौ ध्यानमात्रोऽग्निर्व्रतान्तेस्योपतिष्ठति ।
दहेयमिति यं चेच्छेत् तं दहत्येव पावकः ॥ ८२ ॥
अप्स्वप्यग्निर्ज्वलत्येव तद्व्रतस्य महात्मनः ।
समर्द्धयति तं चेष्टैः कामैर्वह्निः प्रयत्नतः ॥ ८३ ॥

---

1. ऋ० ३. ६२. १०. 2. ऋ० १. १.

अतः परं तृचाः[1] सप्त वाय्वाद्या ये प्रकीर्तिताः ।
तान् जपन् प्रयतो नित्यमिष्टान्कामान्त्समश्नते ॥ ८४ ॥
मेधातिथावृषौ पुनः सदसस्पतिमित्यृचम्[2] ।
मेधाकामो जपेन्नित्यं जुहुयाच्चाज्यमेतया ॥ ८५ ॥
स्योनेति[3] पृथिवीं नित्यं स्नात्वा विप्रः शुचिर्जपेत् ।
विन्दते महतीं भूमिमसपत्नामकण्टकाम् ॥ ८६ ॥
इदं[4] विष्णुरितीमाभिः पञ्चभिः श्राद्धकर्मणि ।
अङ्गुष्ठमन्ने वगाह्य तेन रक्षांसि बाधते ॥ ८७ ॥
अङ्गुष्ठमात्रो भगवान् विष्णुः पर्यटते महीम् ।
राक्षसानां वधार्थाय तच्छ्राद्धे प्रहरिष्यति ॥ ८८ ॥
अक्षय्यं च भवेदन्नं श्रद्धाभक्तिसमन्वितम् ।
तस्माच्छ्राद्धेषु सर्वेषु अङ्गुष्ठग्रहणं स्मृतम् ॥ ८९ ॥
सप्तजन्मकृतं पापं कृत्वा चाभक्ष्यभक्षणम् ।
तद्विष्णोरित्यपां[5] मध्ये सकृज्जप्त्वा विशुद्ध्यति ॥ ९० ॥
अम्बयो[6] यन्ति याः प्रोक्ता नवर्चस्त्वभिषेचणीः ।
आयुष्यास्ताः परिप्रोक्ता भैषज्याः पापमोचनीः ॥ ९१ ॥
शुनःशेपमृषिं[7] बद्धः सन्निरुद्धोऽथवा जपेत् ।
मुच्यते सर्वपाशेभ्यो गदी चाप्यगदी भवेत् ॥ ९२ ॥
य इच्छेच्छाश्वतान्कामानिन्द्रात्प्राप्तुं पुरन्दरात् ।
स षोडशभिरेवर्ग्भिरिन्द्रं[8] स्तूयाद्दिने दिने ॥ ९३ ॥
हैरण्यस्तूपमिन्द्रस्य[9] सूक्तं कर्माभिसंस्तवम ।
तज्जपन् प्रयतः शत्रूनयत्नात्प्रतिबाधते ॥ ९४ ॥
आ कृष्णेनेत्यृचा[10] त्वेव यो नित्यं सूर्यमर्चति ।
प्रातर्मध्येऽस्तगं वापि स जीवेदगदः सुखी ॥ ९५ ॥
आ कृष्णेनेत्यृचं[10] त्वेकां ध्यायन्निशि दिवौकसः ।
अग्नौ हुत्वैतया चाज्यं दीर्घमायुरवाप्नुयात् ॥ ९६ ॥

---

1. ऋ. १. २-३. 2. ऋ० १. १८. ६. 3. ऋ० १. २२. १५. 4. ऋ० १. २२. १७-२१. 5. ऋ० १. २२. २०. 6. ऋ० १. २३. १६-२४. 7. ऋ० १. २४-३०. 8. ऋ० १. ३०. १-१६. 9. ऋ० १. ३२. 10. ऋ० १. ३५. २.

ये ते पन्था[1] इतीमां तु सावित्रीमध्वगोऽभ्यसेत् ।
स्वस्तिमान् व्रजतेऽध्वानं गृहांश्चाप्नोत्यनामयान् ॥ ९७ ॥
सं पूषन्निति[2] यत्सूक्तं घौरः कण्वो जगावृषिः ।
अध्वन्यमेतद्विज्ञेयं परिपन्थ्यपसेधनम् ॥ ९८ ॥
रौद्रीभिः[3] षड्भिरीशानं तुष्टूयाद्यो दिने दिने ।
स नारीनरगोशान्तिं शङ्करात्प्राप्नुयात्सदा ॥ ९९ ॥
एतेनैव षडर्चेन जुहुयादाज्यमन्वहम् ।
चरुं वा कल्पयेद्रौद्रं भूतिकामोऽथ पर्वसु ॥ १०० ॥
उदित्युद्यन्तमादित्यमुपतिष्ठेद्दिने[4] दिने ।
हृद्रोगनाशनं ह्येतत्परमारोग्यवर्द्धनम् ॥ १०१ ॥
द्विषन्तमित्यथार्द्धर्चं[5] यं द्विष्यात्तं जपन्त्स्मरेत् ।
आगस्कृत् सप्तरात्रेण विद्वेषमधिगच्छति ॥ १०२ ॥
रोगैर्गृहीतो रोगी च प्रस्कण्वस्योत्तमं[6] तृचम् ।
आरोग्यमेतत्प्रयतो जपेन्नित्यमनेकशः ॥ १०३ ॥
उत्तमस्तस्य चार्द्धर्चो द्विषद्द्वेष[7] इति स्मृतः ।
यं द्विष्यात्तमभिध्यायेद् दृष्ट्वा चैनं जपेदिदम् ॥ १०४ ॥
आगस्कृच्चेत्त्रिरात्रेण विद्वेषं स निगच्छति ।
उदयत्यायुरक्षय्यं तेजो मध्यन्दिने जपन् ॥ १०५ ॥
अस्तं व्रजति सूर्ये तु द्विषन्तं प्रतिबाधते ।
ओजस्तेजस्तथारोग्यं द्विषद्द्वेषं प्रकीर्तितम् ॥ १०६ ॥
नव पश्वेति[8] सूक्तानि जगौ यानि पराशरः ।
अरातीनां हरेत्प्राणांश्छत्रूंश्चैव नियच्छति ॥ १०७ ॥
सौपर्णानि[9] पवित्राणि सूक्तान्येकादशाभ्यसेत् ।
वाञ्छन्पुत्रान्पशून् वित्तं स्वर्गमायुरनन्धताम् ॥ १०८ ॥
आध्यात्मिकीः क[10] इत्येता जपंस्तु सुसमाहितः ।
प्राप्नुयात्स परं धाम विश्वं ज्योतिः सनातनम् ॥ १०९ ॥

---

1. ऋ० १. ३५. ११. 2. ऋ० १. ४२. 3. ऋ० १. ४३. १-६. 4. ऋ० १. ५०. 5. ऋ० १. ५०. १३ ग-घ 6. ऋ० १. ५०. ११-१३. 7. ऋ० १. ५०. १३ ग-घ 8. ऋ० १. ६५-७३. 9. ऋ० १. ७४-८४. 10. ऋ० १. ८४. १६-१८.

आ-नो-भद्रीयमायुष्यं[1] वैश्वदेवं जपन्मुनिः ।
मुमुर्षुरपि जप्त्वैतत्सर्वमायुरवाप्नुयात् ॥११०॥
पितॄणां श्राद्धकालेषु तु मध्विवत्येतत्तृचं[2] पठेत् ।
अघोराः पितरस्तस्य विशन्ति ज्योतिरुत्तमम् ॥ १११ ॥
त्वं सोमेति[3] तु सूक्तेन पश्येच्चन्द्रमुपोदितम् ।
उपतिष्ठेत्समित्पाणिर्मासि मासि नवं नवम् ॥ ११२ ॥
तं मासं तस्य दुःखं हि न जातु त्रिविधं भवेत् ।
गोतमेन पुरा दृष्टं मृत्योर्नाशनमात्मनः ॥ ११३ ॥
उद्यन्तमुपतिष्ठेत पूर्णो चैतत्समाहितः ।
वासांस्यपि स विन्देत चन्द्रस्यैति सलोकताम् ॥ ११४ ॥
धनकामो जपेन्नित्यमेता[4] इति तु नित्यशः ।
स्नात्वा शुचिस्तु नियत इष्टं धनमवाप्नुयात् ॥ ११५ ॥
आयुरीप्सन्निमम्[5]इति कौत्सं सूक्तं सदाऽभ्यसेत् ।
आज्याहुतीश्च जुहुयात्प्रत्यृचं वाग्यतः शुचिः ॥ ११६ ॥
जपेदाप्लुत्य नियतः स साक्षादापदं तरेत् ।
अप नः शोशुचदिति[6] स्नात्वा मध्यन्दिने रवौ ॥ ११७ ॥
शुद्धिकामो यताहारः प्रत्यृचं जुहुयाद् घृतम् ।
समिधोऽन्वहमष्टौ वा सूक्तमेतदघापहम् ॥ ११८ ॥
यथा मुञ्जादिवेषीका तथा पापात्प्रमुच्यते ।
जातवेदस[7] इत्यादि सदा स्वस्त्ययने जपेत् ॥ ११९ ॥
दुर्गे पथि प्रयातस्य नास्यारिभ्यो भयं भवेत् ।
राजकार्येश्वयूथे वा अभिशस्तोऽप्यनेकधा ॥ १२० ॥
अशक्ये प्रतिभाकार्ये भये प्राणान्तिकेपि वा ।
जातवेदस इत्येतां जपंस्तेभ्यः प्रमुच्यते ॥ १२१ ॥
सिसाधयिषुरर्थं च प्रस्थितो मनसा जपेत् ।
सिद्धार्थः स्वस्तिमानेति प्रमीयेत न चाध्वनि ॥ १२२ ॥
कृतार्थः स्वगृहान्गच्छन्नेतामेव सदाभ्यसेत् ।
उदिते सवितर्येतां जपेदस्तं गते तथा ॥ १२३ ॥

---

1. ऋ० १. ८९. 2. ऋ० १. ९०. ६-८. 3. ऋ० १. ९१. 4. ऋ० १. ९२. 5. ऋ० १. ९४. 6. ऋ० १. ९७. 7. ऋ० १. ९९.

अहःस्वस्त्ययनं प्राता रात्रिस्वस्त्ययनं निशि ।
व्युष्टायां च जपेन्नित्यमेतां दुःस्वप्ननाशिनीम् ॥ १२४ ॥
प्र मन्दिन[1] इत्यसूत्यां जपेद् गर्भप्रमोचिनीम् ।
इन्द्रं च मनसा ध्यायेन्नारी गर्भं प्रमुञ्चति ॥ १२५ ॥
आपत्सु सर्वकामो वा त्रितं[2] नित्यं जपेदृषिम् ।
जपन्निन्द्र[3]मिति स्नातो वैश्वदेवं तु सप्तकम् ॥ १२६ ॥
मुच्यते जुह्वदाज्यं तु विश्वस्मादेव सोंहसः ।
शन्तातीयं[4] परं सूक्तं पञ्चविंशकमुत्तमम् ॥ १२७ ॥
नासत्यौ तु नमस्कृत्य परामृद्धिमवाप्नुयात् ।
धर्मसंस्तवनं सूक्तं रपसश्च प्रमोचनम् ॥१२८॥
इमा[5] इति जपेच्छश्वद् रौद्रं सूक्तं द्विजः शुचिः ।
आयुर्विद्यां धनं पुत्रान्गृहांश्चाप्नोत्यनामयान् ॥१२९॥
वीरेष्वपत्यगोष्ठेषु दुःस्वप्नेरिप्रमात्मनः ।
मा नो महान्त[6]मित्याभ्यां त्रिरात्रोपोषितः शुचिः ॥१३०॥
औदुम्बरीस्तु जुहुयाद्दधिमध्वाज्यसंस्कृताः ।
सूक्तेन जुहुयादाज्यमादावन्ते च कर्मणाम् ॥१३१॥
ऊर्ध्वबाहुस्तु सूक्तेन तुष्टाव शतशो भवम् ।
छित्त्वा सर्वान्मृत्युपाशांञ्जीवेद्रोगैर्विवर्जितः ॥१३२॥
तिष्ठन्नुद्यन्तमादित्यं समित्पाणिः शुचिः सदा ।
चित्र[7]मित्युपतिष्ठेत सूक्तेनानेन भास्करम् ॥१३३॥
अतिस्तवेन चैतेन नित्यं मध्यन्दिने रवौ ।
गृणान्नपोहते रिप्रं प्राप्नोति च धनायुषी ॥ १३४ ॥
अध स्वप्नस्ये[8]ति जपेत्प्रातः प्रातर्दिने दिने ।
दुःस्वप्नं नुदते क्षिप्रं न चास्याभोजनाद्भयम् ॥ १३५ ॥
उभे पुनामी[9]ति पुरा रिपुघ्न्यस्तु प्रकीर्तिताः ।
ता जपन्हन्ति रक्षांसि सपत्नांश्च नियच्छति ॥ १३६ ॥

---

1. १. १०१. १. 2. ऋ० १. १०५. 3. ऋ० १. १०६. 4. ऋ० १. ११२. 5. ऋ० १. ११४. 6. ऋ० १. ११४. ७-८. 7. ऋ० १. ११५. 8. ऋ० १. १२०. १२. 9. ऋ० १. १३३.

निर्वर्त्य पञ्च यज्ञांश्च हुत्वा चाग्निं कृताह्निकः ।
ये देवासो[1] दिव्यनया जपन्कामानवाप्नुयात् ॥ १३७ ॥
इन्द्राविष्णू नमस्कृत्य विष्णोर्नु कमिति[2] त्रिभिः ।
समित्पाणिः शुचिर्भूत्वा उपतिष्ठेद्दिने दिने ॥ १३८ ॥
धर्मं बुद्धिं धनं पुत्रानारोग्यं ब्रह्मवर्धनम् ।
प्राप्नोति च परं स्थानं ज्योतीरूपं सनातनम् ॥ १३९ ॥
आततायिनमायान्तं दृष्ट्वा व्याघ्रमथो वृकम् ।
न मा गरन्निति[3] जपंस्तेभ्य एव प्रमुच्यते ॥ १४० ॥
त्रिरात्रोपोषितो रात्रौ जपेदासूर्यदर्शनात् ।
आप्लुत्य प्रयतः सौरीरुपतिष्ठेद्दिवाकरम्[4] ॥ १४१ ॥
नैनं पश्यन्ति वै चौरास्तथाऽन्ये पापवृत्तयः ।
एकः शतानि त्रायेत तस्करेभ्यश्चरन्पथि ॥ १४२ ॥
स्तेयं कृत्वा द्विजो मोहात्त्रिरात्रोपोषितः शुचिः ।
सूक्तं जप्त्वाऽस्यवामीयं[5] क्षिप्रं मुच्येत किल्बिषात् ॥ १४३ ॥
ज्ञातिपुत्रसुहृन्मित्रैर्यश्च राज्यं चिकीर्षति ।
नित्यं स नियतो भूत्वा सूक्तन्तु मनसा जपेत् ॥ १४४ ॥
कया शुभेति[6] पैशुन्यं कृत्वाचार्यनृपद्विजैः ।
श्रुत्वा पररहस्यन्तु गुरोरप्याह शौनकः ॥ १४५ ॥
इमं नु[7] सोममित्येते द्वे ऋचौ प्रयतो जपेत् ।
सर्वान्कामानवाप्नोति न किञ्चित्पातकं भवेत् ॥ १४६ ॥
पितुं न्वित्युपतिष्ठेत[8] नित्यमन्नमुपस्थितम् ।
पूजयेदशनं नित्यं भुञ्जीयादविकुत्सयन् ॥ १४७ ॥
नास्य स्यादन्नजो व्याधिर्विषमप्यन्नतामियात् ।
विषं च पीत्वैतत्सूक्तं जपेत विषनाशनम् ॥ १४८ ॥
नावाग्यतस्तु भुञ्जीत नाशुचिर्न जुगुप्सितम् ।
दद्याच्च पूजयेच्चैव जुहुयाच्च शुचिः सदा ॥ १४९ ॥

---

1. ऋ० १. १३९. ११. 2. ऋ० १. १५४. १-३. 3. १. १५८. ५. 4. ऋ० १. १६४. ४६-४७. 5. ऋ० १. १६४. 6. ऋ० १. १६५. 7. ऋ० १. १७९. ५-६. 8. ऋ० १. १८७.

सुद्वयं नास्य किञ्चित्स्यान्नान्नजं व्याधिमाप्नुयात् ।
उत्पथप्रतिपन्नो यो भ्रष्टो वाऽपि पथः क्वचित् ॥ १५० ॥
पन्थानं प्रतिपद्येत कृत्वा वा कर्म गर्हितम् ।
अग्ने नयेति[1] सूक्तेन प्रत्यृचं जुहुयाद् घृतम् ॥१५१॥
जपँश्च प्रयतो नित्यमुपतिष्ठेत चानलम् ।
स्नात्वा जपेदनर्वाणं[2] नमस्कृत्य बृहस्पतिम् ॥१५२॥
वीरान् धनञ्च प्राप्नोति सुश्लोक्यञ्च नियच्छति ।
कङ्कतो[3] नेति सूक्तन्तु विषार्तः प्रयतो जपेत् ॥१५३॥
विषं न क्रमते चास्य सर्पाद् दृष्टिविषादपि ।
यत्कीटलूतासु विषं दंष्ट्रिवृश्चिकजं च यत् ॥१५४॥
मौलं च कृत्रिमं चैव जपन्त्सर्वं व्यपोहति ।
धर्मं बुद्धिं धनं पुत्रान् सौभाग्यं ब्रह्मवर्चसम् ॥१५५॥
आरोग्यं पुष्टिमायुष्यं पशून् विद्यां महद् यशः ।
त्रिरात्रोपोषितः स्नातः प्रयतश्चरितव्रतः ॥१५६॥
प्राणायामशतं कृत्वा उपतिष्ठेच्छतक्रतुम् ।
एकाहं सुरसंयुक्तः पादौ सन्धाय वाग्यतः ॥१५७॥
यो जात[4] इति सूक्तेन ऋषिं गृत्समदं स्मरन् ।
शतकृत्वो जपेदेतद् इन्द्र[5] श्रेष्ठेति चान्ततः ॥१५८॥
एकाहाल्लभते वित्तं द्व्यहात्सिद्धिमनुत्तमाम् ।
अहोभिस्त्रिभिरारोग्यं चतुर्भिरशनं बहु ॥१५९॥
पञ्चभिर्ब्रह्मवर्चस्यं षड्भिरायुः सुखावहम् ।
सप्तभिस्तनयान्पुष्टिमष्टभिः प्राप्नुयाद्यशः ॥१६०॥
प्रियो भवति चेन्द्रस्य प्रियं धाम स गच्छति ।
रिपुघ्नं दस्युशमनं रायस्पोषकरं परम् ॥१६१॥
गणानामिति[6] यत्सूक्तं तज्जपेत्सुखवर्द्धनम् ।
सन्ध्ययोः प्रयतस्त्वेतज्जपेन्नित्यं बृहस्पतिम् ॥१६२॥
उपतिष्ठेत सूक्तेन सर्वकामसमृद्धये ।
यो मे राजन्निती[7]मां तु दुःस्वप्नप्रशमनीमृचम् ॥१६३॥

---

1. ऋ० १. १८९. 2. ऋ० १. १९०. 3. ऋ० १. १९१. 4. ऋ० २. १२. 5. ऋ० २. २१. ६. 6. ऋ० २. २३. 7. ऋ० २. २८. १०.

जप्त्वा नाशयति क्षिप्रं दुःस्वप्नं ब्राह्मणः शुचिः ।
अहोरात्रमुपोष्यैकं नियतो ब्रह्मवित्तमः ॥१६४॥
प्रजार्थं जुहुयादाज्यं चरुं वा पयसि शृतम् ।
राकामहमितीमाभिः[1] षष्ठ्यां शुक्लस्य पञ्चभिः ॥१६५॥
हविश्शेषं स्वयं प्राश्य विन्दते महतीं प्रजाम् ।
व्याधिना योऽभिभूतः स्याद् घोरेण प्राणहारिणा ॥१६६॥
चतुर्दशीमुपोष्यैकां कृष्णस्य जुहुयाच्चरुम् ।
आ[2] ते सूक्तेन रौद्रेण प्रत्यृचं वाग्यतः शुचिः ॥१६७॥
पूर्वमाज्याहुतीर्हुत्वा अथोपस्थाय शङ्करम् ।
हविश्शेषेण वर्तेत एकान्तरमतन्द्रितः ॥१६८॥
पूर्णे मासि जयेन्मृत्युं रोगेभ्यश्च प्रमुच्यते ।
अभिशस्येत यो मोहात्कुर्याद्वा कर्म गर्हितम् ॥१६९॥
स्नात्वा भुञ्जन्जपेदप्सु अम्बीत्यृ[3]चमतन्द्रितः ।
अध्वनि प्रस्थितो यस्तु पश्येच्छकुनमुत्थितम् ॥१७०॥
अप्रशस्तं प्रशस्तं वा स्थित्वैद्य प्रयतो जपेत् ।
कनिक्रददिति[4] सूक्ताभ्यामुपतिष्ठेत्ततः स्वरम् ॥१७१॥
शकुनिं वायसं वापि मृगं दंष्ट्रिणमेव च ।
अप्यदृष्ट्वैव जप्तव्यमेतत्तस्करमोहनम् ॥१७२॥

इत्यृग्विधाने प्रथमोऽध्यायः ।

---

# द्वितीयोऽध्यायः

ओम् ।

कल्याणवादी वान्यो वा न वा रौति न दृश्यते ।
जपेदेव नमस्कृत्य सिद्धार्थः सन्निवर्तते ॥ १ ॥
न तस्यास्ति भयं किञ्चिद् दस्युभ्योऽध्वनि वा क्वचित् ।
तरत्यपि च दुर्गाणि स्वस्तिमांश्च सुखी भवेत ॥ २ ॥
यस्य भुक्तं न जीर्येत न तिष्ठेद्वा कथञ्चन ।

1. ऋ० २. ३२. ४-८ 2. ऋ० २. ३३. 3. २. ४१. १६. 4. ऋ० २. ४२, ४३.

ध्यात्वा सोत्तारमन्नस्य अग्निरस्मीत्यृचं[1] जपेत् ॥ ३ ॥
विश्वामित्रस्य संवादं[2] नद्यतिक्रमणे जपेत् ।
आसुत्याचम्य विधिवदुदकस्याञ्जलिं क्षिपेत् ॥ ४ ॥
नमः स्रवद्भ्य इत्येतद् यो नित्यं हि समाचरेत् ।
तं नद्यः स्रोतसः पान्ति स्वं पुत्रमिव मातरः ॥ ५ ॥
भयं चास्य न विद्येत नदीतीरचरेष्वपि ।
जलचरेभ्यो भूतेभ्यश्शीतोष्णैर्न च बाध्यते ॥ ६ ॥
पूर्णां तितीर्षुः सरितं रमध्वमिति[3] संस्मरेत् ।
ओ ष्वित्यृचमपां[4] मध्ये जपेद् यो वै नदीं तरन् ॥ ७ ॥
स शीघ्रं तीरमाप्नोति गाढं वा विन्दते द्विजः ।
युक्तेनैव रथेनाशु योऽपां पारं तितीर्षति ॥ ८ ॥
उद्व ऊर्मिरितीमां[5] तु जपेत नियतः स्वयम् ।
अध्वानं प्रस्थितश्चैवमा मन्द्रैरिति[6] संस्मरेत् ॥ ९ ॥
कार्याण्यशेषतः कृत्वा पुनरायाति वै गृहम् ।
इन्द्रापर्वतेति[7] सूक्तमायुष्यं द्राविणं स्मृतम् ॥ १० ॥
अदातारं सुपुष्टार्थं सर्वदाविष्टचेतनम् ।
हत्वा तद्धनमन्विच्छेत् किन्ते कृण्वन्तीति[8] स्मरन् ॥ ११ ॥
वागिन्द्रियप्रमूढो यो न विद्यां प्रतिपद्यते ।
इन्द्रियार्थान्यथार्थान्वा यो न वेत्ति कथञ्चन ॥ १२ ॥
विद्या वाधिगता यस्य प्रणश्येत पुनः पुनः ।
ससर्परीरृचौ[9] जपन्द्वौ मासौ प्रतिपद्यते ॥ १३ ॥
अनसा सम्प्रयातस्तु स्थिरौ गावाविति[10] स्मरेत् ।
चतस्रः कुशलेनैति सिद्धार्थः स्थिरयानगुः ॥ १४ ॥
यानाक्षमपभग्नान्तं दृष्ट्वा दुर्गेऽध्वनि द्विजः ।
अभि व्ययस्वेति[11] जपेद् द्व्यृचमक्षबलं दधत् ॥ १५ ॥

---

1. ऋ० ३. २६. ७. 2. ऋ० ३. ३३. 3 ऋ० ३. ३३. ५. 4. ऋ० ३. ३३ ९. 5. ऋ० ३. ३३. १३, 6. ऋ० ३. ४५. 7. ऋ० ३. ५३. 8. ऋ० ३. ५३. १४. 9. ऋ० ३. ५३. १५-१६. 10. ऋ० ३. ५३. १७-२०. 11. ऋ० ३. ५३. १९-२०.

कृष्णपक्षे चतुर्दश्यां त्रिरात्रोपोषितः शुचिः ।
दक्षिणप्रवणे देशे श्मशानस्थः समाहितः ॥ १६ ॥
रक्तोष्णीष्यसिपाणिश्च वैल्वकैध्मोऽनिलाशनः ।
सप्ताहं जुहुयात्तैलं सार्षपं लवणान्वितम् ॥ १७ ॥
समिधो राजवृक्षस्य वसिष्ठद्वेषिणीः पठन् ।
यं द्विष्यात्तस्य कृत्वा तु शम्याकेनाकृतिं निशि ॥ १८ ॥
अधिष्ठाय च तां कुर्याद् ऋग्भिश्चतसृभिर्द्विजः[1] ।
उद्दिश्य नाम होमोयं सप्तरात्रं न जीवति ॥ १६ ॥
वसिष्ठानन्ततो हन्ति अथैतत्कुशिकोदितम् ।
नास्य कश्चिदवध्योऽस्ति जपतो जुह्वतोऽपि वा ॥ २० ॥
द्वाविंशकं[2] जपेत्सूक्तमाध्यात्मिकमनुत्तमम् ।
पर्वसु प्रयतो नित्यमिष्टान्कामान्त्समश्नुते ॥ २१ ॥
बृहस्पतिमजाश्वं च सवितारं च बभ्रुं च ?
ऋतावृधौ दिने दिने तृचैः पञ्चभिरन्वहम् ॥ २२ ॥
बृहस्पत[3] इति पञ्चाहं प्रत्यृचं जुहुयाद् घृतम् ।
हुत्वाग्निमर्चयित्वा तु गन्धमाल्यैः सधूपकैः ॥ २३ ॥
ता एव देवताः पञ्च कामैरर्चन्ति पञ्चभिः ।
रत्नैरपत्यैः पशुभिर्मखैर्दीर्घेण चायुषा ॥ २४ ॥
अथ वेदादिगीतायाः प्रसादजननं विधिम् ।
गायत्र्याः[4] सम्प्रवक्ष्यामि धर्मकामार्थमोक्षदम् ॥ २५ ॥
नित्ये नैमित्तिके काम्ये त्रितये तु परायणम् ।
गायत्र्यास्तु परं नास्ति इह लोके परत्र च ॥ २६ ॥
मेध्यान्नमितभून् मौनी त्रिःस्नानार्चनतत्परः ।
जपेल्लक्षत्रयं धीमाननन्यमानसक्रियः ॥ २७ ॥
कर्मभिर्योजयेत्पश्चात्क्रमशः स्वेच्छयापि वा ।
यावत्कार्यं न कुर्वीत न लोपेत्तावत्तद्व्रतम् ॥ २८ ॥
आदित्यस्योदये स्नात्वा सहस्रं प्रत्यहं जपेत् ।
आयुरारोग्यमैश्वर्यं धनं च लभते ध्रुवम् ॥ २६ ॥

---

1. ऋ० ३. ५३. २१-२४. 2. ऋ० ३. ५४; ५५? 3. ऋ० ३. ६२. ४-१८.
4. ऋ० ३. ६२. १०.

त्रिरात्रोपोषितः सम्यग् घृतं हुत्वा सहस्रशः ।
सहस्रलाभमाप्नोति हुताशे खादिरेन्धने ॥ ३० ॥
पालाशसमिधां चैव घृताक्तानां हुताशने ।
सहस्रलाभमाप्नोति राहुसूर्यसमागमे ॥ ३१ ॥
हुत्वा तु खादिरे वह्नौ सघृतं रक्तचन्दनम् ।
सहस्रहेममाप्नोति राहुचन्द्रसमागमे ॥ ३२ ॥
रक्तचन्दनमिश्रं तु सघृतं हव्यवाहने ।
हुत्वा गोमयमाप्नोति सहस्रं गोधनं द्विजः ॥ ३३ ॥
यस्यास्तु गोर्गोमयेन गुटिकानां सहस्रशः ।
हुत्वा तां गामवाप्नोति घृताक्तानां हुताशने ॥ ३४ ॥
यवैरश्वांस्तिलैर्हस्तीन् महिष्यो यावकैस्तथा ।
शालितण्डुलहोमेन कन्यालाभमवाप्नुयात् ॥ ३५ ॥
जातिचम्पकराजार्ककुसुमानां सहस्रशः ।
हुत्वा वस्त्राण्यवाप्नोति घृताक्तानां हुताशने ॥ ३६ ॥
सूर्यबिम्बे जलमध्ये तोयं हुत्वा सहस्रशः ।
सहस्रं प्राप्नुयाद्धैमं रौप्यमिन्दुमये हुते ॥ ३७ ॥
अलक्ष्मीपापसंयुक्तो मलव्याधिविनायकैः ।
मुच्येत् सहस्रजप्तेन स्नायाद् यस्तु जलेन वै ॥ ३८ ॥
यां दिशं सप्तजप्तेन लोष्टेन सम्प्रचाटयेत् ।
चौराग्निमारुतोत्थानि भयानि न भवन्ति वै ॥ ३९ ॥
क्षीराहारो जपेल्लक्षमपमृत्युं व्यपोहति ।
घृताशी प्राप्नुयान्मेधां बहुविज्ञानसञ्चयम् ॥ ४० ॥
हुत्वा वेतसपत्राणि घृताक्तानां हुताशने ।
लक्षाद्वर्धापयेद्देवं सार्वभौमं न संशयः ॥ ४१ ॥
लक्षेण भस्महोमस्य कृत्वा ह्युत्तिष्ठते जलात् ।
आदित्याभिमुखः स्थित्वा नाभिमात्रे जले शुचिः ॥ ४२ ॥
तिलानां लक्षहोमेन घृताक्तानां हुताशने ।
सर्वकामसमृद्धात्मा परां सिद्धिमवाप्नुयात् ॥ ४३ ॥
यवानां लक्षहोमेन घृताक्तानां हुताशने ।
सर्वकामसमृद्धात्मा परं स्थानमवाप्नुयात् ॥ ४४ ॥

घृतस्याहुतिलक्षेण सर्वान् कामानवाप्नुयात् ।
पञ्चगव्याशनो लक्षं जपेज्जातिस्मरो भवेत् ॥ ४५ ॥
तदेव ह्यनले हुत्वा प्राप्नोति बहुशो धनम् ।
अन्नाद्यहवनान्नित्यमन्नाद्यं च भवेत्सदा ॥ ४६ ॥
जुहुयात्सर्वसाध्यानामाहुत्ययुतसंख्यया ।
रक्तसिद्धार्थकान्हुत्वा सर्वान्साधयते रिपून् ॥ ४७ ॥
लवणं मधुसंयुक्तं हुत्वा सर्वं वशीभवेत् ।
हुत्वा तु करवीराणि रक्तानि जनयेज्ज्वरम् ॥ ४८ ॥
हुत्वा बैभीतकं तैलं देशादेव प्रचाटयेत् ।
हुत्वा तु निम्बपत्राणि विद्वेषं जनयेन्नृणाम् ॥ ४९ ॥
रक्तानां तण्डुलानां तु घृताक्तानां हुताशने ।
हुत्वा बलमवाप्नोति शत्रुभिर्न स जीयते ॥ ५० ॥
प्रत्यानयनसिद्ध्यर्थं मधुसर्पिःसमन्वितम् ।
गव्यं क्षीरं प्रदीप्तेऽग्नौ जुह्वतस्तत्प्रशाम्यति ॥ ५१ ॥
ब्रह्मचारी मिताहारो यः सहस्रत्रयं जपेत् ।
संवत्सरेण लभते धनैश्वर्यं न संशयः ॥ ५२ ॥
शमीबिल्वपलाशानामर्कस्य तु विशेषतः ।
पुष्पाणां समिधां चैव हुत्वा हैममवाप्नुयात् ॥ ५३ ॥
अब्ब्रह्मत्र्यम्बकादीनां यस्यायतनमाश्रितः ।
जपेल्लक्षं निराहारः स तस्य वरदो भवेत् ॥ ५४ ॥
बिल्वानां लक्षहोमेन घृताक्तानां हुताशने ।
परां श्रियमवाप्नोति यदि न भ्रूणहा भवेत् ॥ ५५ ॥
पद्मानां लक्षहोमेन घृताक्तानां हुताशने ।
प्राप्नोति राज्यं निखिलमसपत्नमकण्टकम् ॥ ५६ ॥
पंचविंशतिलक्षेण दधिक्षीरघृताशनः ।
स्वदेहे सिद्ध्यते जन्तुः कौशिकस्य मतं यथा ॥ ५७ ॥
एकाहं पंचगव्याशी एकाहं मारुताशनः ।
एकाहं ब्राह्मणान्नाशी गायत्रीजप उच्यते ॥ ५८ ॥
शतेन गायत्र्या स्नात्वा शतमन्तर्जले जपेत् ।
शतेनापस्ततः पीत्वा सर्वपापैः प्रमुच्यते ॥ ५९ ॥

गोघ्नः पितृघ्नो मातृघ्नो ब्रह्महा गुरुतल्पगः ।
सुवर्णरत्नहारी च यश्च विप्रः सुरां पिबेत् ॥ ६० ॥
अयाज्ययाजनं कृत्वा कृत्वा वा कर्म गर्हितम् ।
न सीदेत् प्रतिगृह्णानो महीमपि ससागराम् ॥ ६१ ॥
ये चास्य दुःस्थिता लोके ग्रहाः सूर्यादयो भुवि ।
ते यान्ति सौम्यतां सर्वे शिवा इति न संशयः ॥ ६२ ॥

कृणुष्वेति[1] जपन्त्सूक्तं रक्षोघ्नं दस्युभिर्वृतः ।
अरातीनां हरेत्प्राणान् रक्षांस्यपि च नाशयेत् ॥ ६३ ॥
उपतिष्ठेत यो वह्निं परीत्यृचा[2] दिने दिने ।
तं रक्षति स्वयं वह्निर्विश्वतो विश्वतोमुखः ॥ ६४ ॥
को अद्येति[3] तु सूक्तेन यो नित्यं शक्रमर्चति ।
जपेद्वाथ नमस्कारैः शक्रतो लभते वरान् ॥ ६५ ॥
कयेति[4] वामदेव्येन कुर्यात्स्वस्त्ययनं निशि ।
जपेद्वा सन्धिवेलासु ब्रह्मैतत्कुशिकोदितम् ॥ ६६ ॥
हंसः शुचिषदित्यृचा[5] शुचिरीक्षेद्दिवाकरम् ।
अन्तकाले जपन्निति ब्रह्मणः सद्म शाश्वतम् ॥ ६७ ॥
कृषिं प्रपद्यमानस्तु स्थालीपाकं यथाविधिः ।
जुहुयात्क्षेत्रमध्ये तु शुनं वाहा[6]स्तु पञ्चभिः ॥ ६८ ॥
यथालिङ्गं तु विहरेल्लाङ्गलं च कृषीवलः ।
इन्द्राय च मरुद्भ्यश्च पर्जन्याय भगाय च ॥ ६९ ॥
पूष्णे धान्याय सीतायै शुनासीरमथोत्तरम् ।
हुत्वा तु पृथगेतासां यजेदेताश्च देवताः ॥ ७० ॥
गन्धमाल्योपहारैश्च फललाजसुरासवैः ।
प्रवपणे प्रलवने खलसीतोपहारयोः ॥ ७१ ॥
एता एव यजेन्नित्यं देवता विधिना शुचिः ।
अमोघं कर्म भवति कृषिर्वर्द्धति सर्वदा ॥ ७२ ॥
क्षेत्रस्य पतिनेत्येतत्[7] क्षैत्रपत्यं तृचं जपेत् ।
ईक्षेत्सूर्यं द्विजो नित्यं विन्दते क्षेत्रमुत्तमम् ॥ ७३ ॥

---

1. ऋ० ४. ४. 2. ऋ० ४. ६. ८. 3. ऋ० ४. २५. 4. ऋ० ४. ३१. 5. ऋ० ४. ४०. ५. 6. ऋ० ४. ५७. ४-८. 7. ऋ० ४. ५७. १-३

आखूत्करेषु चरुणा यजेदेतेन मूषिकान् ।
चित्र इद्राजेत्यनया[1] स्तुत्वा चात्तुपतिं सदा ॥ ७४ ॥
ब्राह्मणान् भोजयेदत्र कीनाशांश्चैव भोजयेत् ।
अप्रमत्तः शान्तिपरः स्वयमेव कृषिं व्रजेत् ॥ ७५ ॥
भूमिभङ्गो गवां हिंसा तृणकीटादिनाशनम् ।
एतेषु यत्कृतं पापं खलदानेन शुद्ध्यति ॥ ७६ ॥
धान्यानां विंशकं भागं श्रोत्रियेभ्यो निवेदयेत् ।
विंशकस्य द्वि दानेन कृषिदोषात्प्रमुच्यते ॥ ७७ ॥
समुद्रादिति[2] सूक्तेन यः सदा जुहुयाद् घृतम् ।
तमग्निः सर्वतः पाति भद्रेण द्रविणेन च ॥ ७८ ॥
पूर्वोक्तेनैव कल्पेन संयतात्मा जितेन्द्रियः ।
वि ज्योतिषेति[3] ज्वलयेद् यत्रेच्छेज्जातवेदसि ॥ ७९ ॥
विश्वानि न[4] इति द्वाभ्यामृग्भ्यां यो वह्निमर्चयेत् ।
स तरत्यापदः सर्वा यशः प्राप्नोति चाक्षयम् ॥ ८० ॥
हुत्वा वह्निरुपस्थेयः प्राणार्थे हव्यवाहनः ।
अग्ने त्वमिति[5] सूक्तेन धनमायुश्च वाञ्छता ॥ ८१ ॥
य इच्छेद्विविधं वित्तं सत्त्वं चानुपमं महत् ।
उरोष्ट[6] इति सूक्तेन उपतिष्ठेच्छतक्रतुम् ॥ ८२ ॥

... ... ... ... ... ...

प्रजाकामो यजेन्नित्यं चरुणा देवपत्नयः[7] ।
उपहृत्योपहारं च शेषं भुञ्जीत वाग्यतः ॥ ८३ ॥
उच्छिष्टं च प्रदातव्यं भार्यायै पुत्रमिच्छता ।
धेन्वाः सरूपवत्सायाः पयसा साधयेच्चरुम् ॥ ८४ ॥
अनुरूपां प्रजामाशु लभते नात्र संशयः ।
स्वस्त्यात्रेयं[8] जपेन्नित्यं प्रातः प्रातर्द्विजः शुचिः ॥ ८५ ॥
एतत्स्वस्त्ययनं पुण्यं सर्वकल्मषनाशनम् ।
सुहृदं ज्ञातिनं चैव गच्छन्तमनुमन्त्रयेत् ॥ ८६ ॥

---

1. ऋ० ८. २१. १८. 2. ऋ० ४. ५८. 3. ऋ० ५. २. ९. 4. ऋ० ५. ४. ६. 5. ऋ० ५. २४. 6. ऋ० ५. ३८. 7. ऋ० ५. ४६. ७-८. 8. ऋ० ५. ५०; ५१.

स्वस्ति पन्थामिति[1] प्रोच्य स्वस्तिमान् व्रजतेऽध्वनि ।
वि जिहीष्व वनस्पते[2] तदिदं च्यावनं स्मृतम् ॥ ८७ ॥
यं च्यावयितुकामः स्याच्च्यावयेत्तमिदं जपन् ।
द्विषन्तं वा पदाक्रम्य भूमौ पांशुमयीं कृतिम् ॥ ८८ ॥
निष्पीड्यन्निव संग्रामाच्च्यवते नात्र संशयः ।
स्त्रियं गर्भप्रमूढां वा पाययेदनुमन्त्रितम् ॥ ८९ ॥
उदकं च्यावनेनैव गर्भोऽधश्च्यवते सुखम् ।
अच्छा वदेति[3] सूक्तं तु वृष्टिकामः प्रयोजयेत् ॥ ९० ॥
निराहारः क्लिन्नवासा अचिरेण प्रवर्षति ।
हुत्वायुतं वैतसीनां क्षीराक्तानां हुताशने ॥ ९१ ॥
महद् वर्षमवाप्नोति सूक्तेनाच्छावदेन हि ।
य इच्छेद्वरदां देवीं श्रियं नित्यं कुले स्थिताम् ॥ ९२ ॥
स शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
श्रियः पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥ ९३ ॥
आवाहयेच्छ्रियं पद्मे पञ्चभिः कनकेऽपि वा ।
उपहारानुपहरेच्छुक्लान् भक्तान् पयो दधि ॥ ९४ ॥
स्थालीपाकं च शालीनां पयसा सम्प्रकल्पयेत् ।
चान्द्रायणकृतात्मा तु प्रपद्येत् प्रयतः श्रियै ॥ ९५ ॥
सर्वौषधिभिः फाण्टाभिः स्नात्वाद्भिः पावनैरपि ।
उपैतु मां देवसख इति राज्ञोभिषेचनी ॥ ९६ ॥
मनसः काममित्येषा पशुकामाभिषेचनी ।
कर्दमेनेति यः स्नायात् प्रजाकामः शुचिव्रतः ॥ ९७ ॥
अश्वपूर्णामिति स्नायाद्राज्यकामः शुचिव्रतः ।
रोहिते चर्मणि स्नायाद् ब्राह्मणस्तु यथाविधि ॥ ९८ ॥
राजा चर्मणि वैयाघ्रे क्षत्रियस्त्वथ रौरवे ।
बस्तचर्मणि वैश्यस्तु होमः कार्यस्त्वनन्तरम् ॥ ९९ ॥
चन्द्रामिति तु पद्मानि जुहुयात्सर्पिषा द्विजः ।
आदित्यवर्ण इत्यनया बिल्वहोमो विधीयते ॥ १०० ॥
बिल्वेध्म एव वाग्निः स्यात् स्थालीश्च जुहुयाद् द्विजः ।
दशसाहस्त्रिको होमः श्रीकामः प्रथमो विधिः ॥ १०१ ॥

---

1. ऋ० ५. ५१. १५. 2. ऋ० ५. ७८. ५-६. 3. ऋ० ५. ८३.

हुत्वा तु प्रयुतं सम्यगनन्तां विन्दते श्रियम् ।
अयुतं शतकृत्वस्तु हुत्वा शुक्लानि सर्पिषा ॥ १०२ ॥
अनन्तामव्यवच्छिन्नां शाश्वतीं विन्दते श्रियम् ।
अशक्तौ जप एवोक्तो दशसाहस्रिको वरः ॥ १०३ ॥
जप्त्वा तु प्रयुतं सम्यगनन्तां विन्दते श्रियम् ।
अयुतं शतकृत्वस्तु जप्त्वा श्रियमुपाश्नुते ॥ १०४ ॥
अप्स्वेव जुहुयान्नित्यं पद्मान्ययुतशो निशि ।
दृष्ट्वा श्रियं तूपरमेत् किलासित्वाद्बिभेतु वै ॥ १०५ ॥
बिल्वाशी बिल्वनिलयो जुह्वद् बिल्वानि सर्पिषा ।
एकविंशतिरात्रेण परां सिद्धिं नियच्छति ॥ १०६ ॥
येन येन च कामेन जुहोति प्रयतः श्रियै ।
पद्मान्यथापि बिल्वानि स स कामः समृध्यति ॥१०७॥
न जातु कृपणार्थाय श्रियमावाहयेत्क्वचित् ।
न यत्किञ्चनकामेन होमः कार्यः कथञ्चन ॥१०८॥
महद्वा प्रार्थ्यमानेन राज्यकामेन वा पुनः ।
वाचः परं प्रार्थयिता यत्नाद् युक्तः श्रियं यजेत् ॥१०९॥
अग्निरैत्विति सूक्तेन जुहुयादाज्यमन्वहम् ।
ओजस्विनीमवाप्नोति प्रजां धर्मवतीं शुभाम् ॥११०॥
अच्छा न[1] इत्यृचा दीप्तमुपतिष्ठेद् विभावसुम् ।
प्रज्ञां प्राप्य जयेच्छत्रूंस्तरते दुरितानि च ॥१११॥
आ गाव[2] इति सूक्तेन गोष्ठगा लोकमातरः ।
उपतिष्ठेद् व्रजन्तीश्च य इच्छेत्ताः सदाक्षयाः ॥११२॥
त्वामिद्धीति[3] प्रगाथेन उपतिष्ठेच्छतक्रतुम् ।
मध्याह्ने सन्ध्ययोश्चैव जपन्धनमवाप्नुयात् ॥११३॥
उपेति[4] तिसृभी राज्ञो दुन्दुभीन् संस्पृशेद् रणे ।
ओजो बलमवाप्नोति शत्रूंश्चैव नियच्छति ॥११४॥
पाणिना तृणमादाय यज्ञायज्ञेति[5] योऽभ्यसेत् ।
सोऽधीतस्यास्य सूक्तस्य फलं प्राप्नोति नातृणः ॥११५॥

---

1. ऋ० ६. २. ११. 2. ऋ० ६. २८. 3. ऋ० ६. ४६. 4. ऋ० ६. ४७. २९-३१. 5. ऋ० ६. ४८.

सूक्तान्ते च तृणां त्वग्नाविरिणे वोदकेऽपि वा ।
निक्षिपेत् तत्प्रयत्नेन त्यक्त्वाऽन्यत्र भयावहम् ॥११६॥
तृणपाणिर्जपन्त्सूक्तं रक्षोघ्नं दस्युभिर्वृतः ।
न भयं विन्दते क्वचिद् रक्षोभ्योऽरिभ्य एव च ॥११७॥
गृहात्प्रपद्यमानस्तु पन्थानं धनकाम्यया ।
जपेत्सोऽध्वनि यत्नेन अपि पन्थामिति[1] व्रजन् ॥११८॥
ये के च ज्मेत्यृचं[2] जप्त्वा ध्यायन्निशि दिवौकसः ।
अग्नौ हुत्वैतया चाज्यं दीर्घमायुरवाप्नुयात् ॥११९॥
वयमु त्वेति[3] सूक्तन्तु पौष्णं द्रविणवर्द्धनम् ।
नित्यं जपेच्छुचिर्भूत्वा धनं विन्दत्यभीप्सितम् ॥१२०॥
यस्य नष्टं भवेत्किञ्चिद् द्रव्यं गौर्द्विपदं धनम् ।
नश्येद्वाध्वनि यो मोहात् सं पूषन्[4] स जपेन्निशि ॥१२ ॥
[5] इयमित्येतदाद्यन्तं सूक्तं सारस्वतं द्विजः ।
नित्यं जपेच्छुचिर्भूत्वा वाङ्मी भवति बुद्धिमान् ॥१२२॥
सं वामिति[6] तु यत्सूक्तमष्टर्चं त्रैष्टुभं स्मृतम् ।
तज्जपन् प्रयतो नित्यमिष्टान् कामान् समश्नुते ॥१२३॥
यो अद्रिभित्[7] तु यत्सूक्तं तत्सपत्ननिबर्हणम् ।
बृहस्पतिं नमस्कृत्वा सपत्नान् स्तृणुते बहून् ॥१२४॥
एनस्वी वाभिशस्तो वा कृत्वा वा कर्म गर्हितम् ।
सोमारौद्रं[8] जपेत्सूक्तं कृत्स्नमेनो व्यपोहति ॥१२५॥
जुहुयाद्वा य एताभिर्ऋग्भिर्नित्यं धृतव्रतः ।
वारुणेभ्यः स पाशेभ्यो मुच्यते शं तथाऽऽप्नुयात् ॥१२६॥
जीमूतसूक्तस्य[9] विधिं यथालिङ्गमवेत्य वै ।
ऋग्भिः कर्माणि कुर्वीत रथाङ्गानां यथाविधि ॥१२७॥
संग्रामन्तु प्रयातस्य राज्ञश्चैतत्प्रयोजयेत् ।
सर्वाण्यङ्गानि रथ्यांश्च सदश्वांश्चानुमन्त्रयेत् ॥१२८॥
यमेव देशं गच्छेत शत्रुं वाप्यनुमन्त्रितः ।
नाजित्वा विनिवर्तेत परं हि ब्रह्मणो बलम् ॥१२९॥

1. ऋ० ६. ५१. १६. 2. ऋ० ६. ५२. १५. 3. ऋ० ६. ५३. 4. ऋ० ६. ५४. 5. ऋ० ६. ६१. 6. ऋ० ६. ६६. 7. ऋ० ६. ७३. 8. ऋ० ६. ७४. 9. ऋ० ६. ७५.

पुत्रानायुरथारोग्यं य इच्छेदव्ययं सुखम् ।
सोऽग्निं [1] नर इति सूक्तेन जुहुयादाज्यमन्वहम् ॥१३०॥
प्राग्नयेऽ[2]थ त्रिभिः सूक्तैः सन्ध्ययोर्जपमारभेत् ।
न रक्षोभ्यो भयं वेत्ति धनं प्राप्नोति चाक्षयम् ॥१३१॥
अष्टावष्टौ तथा चाष्टावृगित्येव त्रिपादिकम् ।
अकारादिहकारान्तं जले स्थित्वा द्रुतं जपन् ॥१३२॥
उपपातककोटीनां ब्रह्महत्यायुतानि च ।
भ्रूणहत्याकृतं पापं तत्क्षणादेव नश्यति ॥१३३॥
अग्निं दूतं पुरो द[3]धे अग्ने रक्षा णो [4] अंहसः ।
अदाभ्येन शोचि[5]षाग्ना अग्न इहावसे ॥१३४॥
अभि त्वा [6] यः प्रगाथेन नित्यमर्चति वज्रिणम् ।
स श्रियं विपुलां भुङ्क्ते प्राप्नोति च धनायुषी ॥१३५॥
वसिष्ठेन पुरा गीता महदद्भुतमार्जनम् ।
विश्वामित्राभिचारेषु महद्रक्षोनिवारणम् ॥१३६॥
यः प्रात[8]रिति सूक्तं तु स्त्रीकामः सततं जपेत् ।
लभते सदृशीं कन्यां, दीर्घमायुः, स्वरूपिणीम् ॥१३७॥
उत्तरस्याद्यमाचार्यो जुहुयाद् वास्तुकर्मणि ।
स्नातः कृत्वा वैश्वदेवं परं ब्रह्मेदमुच्यते ॥१३८॥
शंवती शं न इन्द्रा[9]ग्नी इत्येते सततं जपेत् ।
न रक्षोभ्यो न भूतेभ्यो व्याधिभ्यो वा भयं भवेत् ॥१३९॥
निवेष्टुकामो रोगार्तो [10] भगसूक्तं सदाभ्यसेत् ।
निवेशं विन्दते क्षिप्रं रोगेभ्यश्च प्रमुच्यते ॥१४०॥
[11] इमा इति जपेन्नित्यं रौद्रं सूक्तं द्विजः शुचिः ।
तज्जपन् प्रजया वित्तैः स्वयं चैव न रिष्यति ॥१४१॥
उत्तितीर्षुरपो यस्तु शङ्केत् स्रोत्यासमागमे ।
समुद्रज्येष्ठा[12] इति जपेत्सूक्तमेतद् भयापहम् ॥१४२॥

---

1. ऋ० ७. १. 2. ऋ० ७. ५; ६; ७. 3. ऋ० ८. ४४. ३. 4. ऋ० ७. १५. १३. 5. ऋ० १०. ११८. ७. 6. ऋ० ७. ३२. २२-२३. 7. ऋ० ७. ३२. २६-२७? 8. ऋ० ७. ४१. 9. ऋ० ७. ३५. 10. ऋ० ७. ४१. 11. ऋ० ७. ४६. 12. ऋ० ७. ४९.

आदित्यदैवते[1] सूक्ते रिपुघ्ने रोगनाशने ।
जपेत्प्रातः शुचिर्भूत्वा रिपुरोगैः प्रमुच्यते ॥१४३॥
वास्तोष्पते[2] प्रतीत्येतत्सूक्तं वास्तोष्पतं जपेत् ।
स्नातः कृत्वा वैश्वदेवं परं ब्रह्मेदमुच्यते ॥१४४॥
अमीवहेति[3] सूक्तेन भूतानि स्वापयेन्निशि ।
नहि प्रस्वापनं किञ्चिदीदृशं विद्यते क्वचित् ॥१४५॥
सम्बाधे विषमे दुर्गे बद्धो वा निर्गतः क्वचित् ।
पलायन्वा गृहीतो वा तस्करैः स जपेदिदम् ॥१४६॥
अमीवहा[4] विश्ववतीमुद्धृत्यान्याः प्रयोजयेत् ।
सूक्तमेतज्जपेत्सर्वमिति मन्येत शौनकः ॥१४७॥
त्रिरात्रं नियतोऽनश्नन् श्रपयेत्पायसं चरुम् ।
तेनाहुतिशतं पूर्णं जुहुयात्सर्पिषा द्विजः ॥१४८॥
समुद्दिश्य महादेवं त्र्यम्बकं त्र्यम्बकेत्यृचा[5] ।
एतत्पर्वशतं कृत्वा जीवेदब्दशतं सुखी ॥१४९॥
तच्चक्षुरित्यृचा[6] स्नात उपतिष्ठेद् दिवाकरम् ।
उद्यन्तं मध्यगं चैव दीर्घमायुर्जिजीविषुः ॥१५०॥
रात्र्या अपरकाले य उत्थाय प्रयतः शुचिः ।
व्युषा[7] इत्युपतिष्ठेत षड्भिः सूक्तैः कृताञ्जलिः ॥१५१॥
प्राप्नुयात्स हिरण्यादि नानारूपं धनं बहु ।
गा अश्वान् पुरुषं धान्यं स्त्रियो वासांस्यजाविकम् ॥१५२॥
ध्रुवासु तासु क्षितिषु[8] जपन्बद्धः प्रमुच्यते ।
तिष्ठन् रात्रौ जपेदेनां विपाशः सम्प्रपद्यते ॥१५३॥
अहोरात्रं स्थितश्चैवमनश्नन् स्याद्विवेष्टितः ।
अयःपाशाः स्फुटन्त्यस्य दारुपाशास्तथैव च ॥१५४॥
स्योनेति[9] पृथिवीं देवीं प्रपद्येन्नियतः सदा ।
जपेदेनां च तत्रापि भूमिपाशात्प्रमुच्यते ॥१५५॥
यत्किञ्चित्पातकं कुर्यात्कर्मणा मनसा गिरा ।
यत्किञ्चेदं वरुणेति[10] ऋचं जप्त्वा प्रमुच्यते ॥१५६॥

---

1. ऋ० ७ ५१;५२. 2. ऋ० ७.५४. 3. ऋ० ७.५५. 4. ऋ० ७.५५.१. 5. ऋ० ७.५९.१२. 6. ऋ० ७.६६.१६. 7. ऋ० ७.७५-८०. 8. ऋ० ७.८८.७. 9. ऋ० १.२२.१५. 10. ऋ० ७.८९.५.

अगम्यागमने चैतत् प्रायश्चित्तं विधीयते ।
अन्यत्र गुरुतल्पाच्च तस्मात्पापात्प्रमुच्यते ॥१५६॥
द्वादशाहमभुञ्जानः स्वगोत्रगमने जपेत् ।
अर्द्धमासमभुञ्जानः सखिदारेषु संवसन् ॥१५७॥
इदमापः प्रवहत[1] यत्किञ्चेदमृचं पुनः ।
इति चैता जपेदपः प्रविश्यैतेषु कर्मसु ॥१५८॥
इन्द्राविष्णू नमस्कृत्य जुहुयादाज्यमन्वहम् ।
सूक्ताभ्यां पर[2] एताभ्यां य इच्छेद्भूतिमात्मनः ॥१५९॥
आस्यदघ्नं विगाह्याम्भः प्राङ्मुखः प्रयतः शुचिः ।
सूक्ताभ्यां तिस्र[3] एताभ्यामुपतिष्ठेद्दिवाकरम् ॥१६०॥
अनश्नता तु जप्तव्यं वृष्टिकामेन यत्नतः ।
पञ्चरात्रे व्यतीते तु महद् वर्षमवाप्नुयात् ॥१६१॥
योऽरिभिः प्रतिपद्येत अभिशस्येत वा मृषा ।
उपोष्यैकं त्रिरात्रं स जुहुयादाज्यमन्वहम् ॥१६२॥
इन्द्रासोमेति[4] सूक्तं तु जपेच्चैतच्छतावरम् ।
किञ्चिद्दद्याद् द्विजेभ्योन्ते स्तृणुते सर्वशात्रवान् ॥१६३॥
यस्य लुभ्येद् व्रतं मोहाद् व्रात्यैर्वा संस्पृशेद् द्विजः ।
उपोष्याज्यं च जुहुयात्त्वमग्ने व्रतपा[5] इति ॥१६४॥
प्र सम्राजमिति[6] त्वेतज्जपन्नीक्षेद् दिवाकरम् ।
उद्यन्तमुपतिष्ठेत स्नात्वा स्नात्वा दिने दिने ॥१६५॥
अभियुक्तो भवेद् यस्तु विवदेद्वापि केनचित् ।
निर्जित्य सगणान् शत्रून् क्षिप्रं वादं पराजयेत् ॥१६६॥
शमग्निरग्निभिश्चेति[7] प्रपद्येद् वायुभास्करौ ।
अग्निं प्रथमतः स्तुत्वा महत्कृच्छ्रात्प्रमुच्यते ॥१६७॥
नहीति[8] यश्चतुष्केण स्नात्वा वै प्रातरुत्थितः ।
द्वौ मासावुपतिष्ठेत स त्रायति भयात्स्वयम् ॥१६८॥

---

1. ऋ० १. २३. २२; १०. ६. ८. 2. ऋ० ७. ९९; १००. 3. ऋ० ७. १०१; १०२. 4. ऋ० ७.१०४. 5. ऋ० ८. ११. 6. ऋ० ८. १६. 7. ऋ० ८. १८. ६. 8. ऋ० ८. ३०.

तृचं जप्त्वा ऽऽयदित्येतत्स्नात्वाभ्यर्च्य पुरन्दरम्[1] ।
प्राप्नुयान्मानसान्कामान् सम्पूज्य वसुरोचिषः ॥१६६॥
आद्यानि त्रीणि[2] सूक्तानि पञ्च[3] चाग्ने बृहन्निति ।
षट्[4] तथान्त्यानि सूक्तानि अग्निं नर[5] इतीति च ॥१७०॥
प्र कृतानीति[6] चाध्यायं भोजनात् प्राक् पठेदिदम् ।
सर्वान् कामानवाप्नोति मुच्यते सर्वकिल्बिषैः ॥१७१॥
प्राग्भोजनमिदं ब्रह्म मानवानां महर्षिणाम् ।
पूर्वाह्णे जपतो नित्यमर्थसिद्धिः परा भवेत् ॥१७२॥
अग्निनेत्याश्विनं[7] सूक्तं चतुर्विंशकमन्वहम् ।
जपेत्प्रातः शुचिर्भूत्वा नासत्यावर्च्य सुव्रतः ॥१७३॥
प्राप्नुयात्परमामृद्धिं द्रविणं चोर्जमेव च ।
समिधेति[8] जुहोत्यग्नौ सूक्तेन प्रत्यृचं घृतम् ।१७४॥
स सिद्धिमतुलां प्राप्य समानां जीवते शतम् ।
द्विचत्वारिंशकेनेह सूक्तेनाघेति वज्रिणः[9] ॥१७५॥
सख्यं लब्ध्वा महेन्द्रेण सपत्नान् स्तृणुते बहून् ।
प्राश्नीयाज्जपतोऽन्नानि प्रश्नं कृत्वा प्रमाणतः ॥१७६॥
तस्मात्पूर्वाह्णिकोऽध्यायः स्मृतोऽयं रिपुनाशनः ।
वाचं महीति[10] च जप्त्वा प्राप्नोत्यारोग्यमेव च ॥१७७॥
दुःस्वप्नघ्नीः[11] परा जप्त्वा प्रातः पापैः प्रमुच्यते ।
शं नो[12] भवेति द्वाभ्यां तु भुक्त्वान्नं प्रयतः शुचिः ॥१७८॥
हृदयं पाणिना स्पृष्ट्वा ज्योग् जीवेदगदः सुखी ।
यतो भयं विजानीयात् तस्यां दिशि यतव्रतः ॥१७९॥
शुचौ देशेऽग्निमाधाय जुहुयादिन्द्रमर्च्य च ।
यत[13] इत्याज्यमुत्पूतं षडभिर्गन्धान् निवेद्य च ॥१८०॥
पायसं दधिमन्थं वा पूपान्वाप्युपहारयेत् ।
अहोरात्रमुपोष्यैकं तिलान् वा घृतमेव वा ॥१८१॥

---

1. ऋ० ८. ३४. १६-१८. 2. ऋ० १०. १-३. 3. ऋ० १०. १-५. 4. ऋ० १०. १८६-१९१. 5. ऋ० ७. १. 6. ऋ० ८. ३२-४५. 7. ऋ० ८. ३५. 8. ऋ० ८. ४४. 9. ऋ० ८. ४५. 10. ऋ० ८. ४६-४७ 11. ऋ० ८. ४७. १४-१८. 12. ऋ० ८. ४८. ४-५. 13. ऋ० ८. ५०. १३-१८.

उक्त्वा [1]मन्दन्त्विति स्नातो हुत्वा शत्रून् प्रभापयेत् ।
बद्धो वाऽप्यवरुद्धो वा वाग्यतः प्रयतो जपेत् ॥१८२॥
[2]त्यान्विवत्यादित्यदैवत्यं सद्यो मुच्येत बन्धनात् ।
[3]यद् द्यावेति जपेन्नित्यं प्रगाथं नियतः शुचिः ॥१८३॥
स कीर्त्तिमतुलां प्राप्य सर्वान्कामान्त्समश्नुते ।
त्वं नो [4]अग्न इति सूक्तेन हुत्वार्च्याग्निं घृतेन तु ॥१८४॥
पालितो विश्वतो दीप्त्या प्राप्नुयाद् वह्निना रयिम् ।
आ [5]तू सूक्तेन सततं धनं याचेत पुरन्दरम् ॥१८५॥
प्र समित्पाणये तस्मै धनं यच्छति वृत्रहा ।
[6]कन्या वारिति सूक्तं तु सततं नियतो जपेत् ॥१८६॥
त्वग्दोषिणीं तथालोम्नीं क्षिप्रं तस्मात्प्रमोचयेत् ।
यदद्य [7]कच्चेत्युदिते रवौ स्तुत्वा पुरन्दरम् ॥१८७॥
गृहान्नपोहते क्षिप्रं वश्यं वा कुरुते जगत् ।
[8]यद्वागिति द्वृचेनैव गौरीं योऽर्चति सुव्रतः ॥१८८॥
तस्य नालंस्कृता वाणी मुखादुच्चरते क्वचित् ।
[9]वयमद्य इति दृष्ट्वार्कमुपतिष्ठेद् द्वृचं पठन् ॥१८९॥
ब्रुवन्नप्यनृतां वाणीं लिप्यते नानृतेन सः ।
पूर्णे चन्द्रमसि ज्योत्स्नामियं [10]येत्यनुषेवयेत् ॥१९०॥
चन्द्रदृष्टिस्त्वनिमिषो वर्चस्वी दृष्टिमान् भवेत् ।
[11]प्रजा हेति जपन् स्नात्वा न योनिं प्रतिपद्यते ॥१९१॥
[12]मातेति गामुपस्पृश्य जपन्गास्तु समश्नुते ।
[13]वचोविदमिति त्वेतां जपन्वाचं समश्नुते ॥१९२॥
[14]पावमानं परं ह्येतन्नवमं मण्डलं जपेत् ।
स्नात्वा शुचिः शुचौ देशे सपवित्रः सकाञ्चनः ॥१९३॥

इत्यृग्विधाने द्वितीयोऽध्यायः ।

---

1. ऋ० ८. ५३. 2. ऋ० ८. ५६. 3. ऋ० ८. ५९. ५-६ 4. ऋ० ८. ६०. 5. ऋ० ८. ७०. 6. ऋ० ८. ८०. 7. ऋ० ८. ८२. ४. 8. ऋ० ८. ८९. १०-११. 9. ऋ० ८. ९०. ११-१२. 10. ऋ. ८. ९०. १३. 11. ऋ० ८. ९०. १४. 12. ऋ० ८. ९०. १५. 13. ऋ० ८. १६. 14. ऋ० मण्डल ९.

# तृतीयोऽध्यायः ।

॥ ओम् ॥

स्वादिष्ठयेति[1] गायत्रीः पावमानीर्जपेद् द्विजः ।
पवित्राणां पवित्रन्तु पावमानीर्ऋचो जपेत् ॥ १ ॥
प्रयतोऽप्सु निमज्याशु सर्वपापैः प्रमुच्यते ।
एतासां कीर्त्तनं पुण्यं स्मरणं धारणं तथा ॥ २ ॥
याथातथ्येन तु ज्ञात्वा ब्रह्मलोकं समश्नुते ।
एतेषां तु यथोक्तानां गुणवद् यद् यदुत्तरम् ॥ ३ ॥
कीर्तनात्तु भवेत्पूतः स्मरणात्स्मरते परम् ।
धारणाद् ब्रह्मतामेति पूतात्मा विजितेन्द्रियः ॥ ४ ॥
याथातथ्येन च ज्ञात्वा ब्रह्मणो विन्दते पदम् ।
श्रावयेद्देवताकृत्ये ब्राह्मणान् भुञ्जतोऽग्रतः ॥ ५ ॥
प्रीणाति देवतां तच्च समर्धयति कर्म च ।
पित्र्ये पितृन् प्रीणयन्ति श्राविताः प्रयतात्मना ॥ ६ ॥
कृत्वा दोषान्त्सुमहतोऽप्यपेयादीन् प्रपीय च ।
जप्त्वा तरत्समन्दीयं[2] प्रविश्यापस्त्र्यहाच्छुचिः ॥ ७ ॥
अक्षय्यं च भवेद्दत्तं पितृभ्यः परमं मधु ।
यः पावमानीरध्येति[3] पूतात्मा विजितेन्द्रियः ॥ ८ ॥
तस्य कामदुघा भूत्वा उपतिष्ठन्ति धेनवः ।
आयुर्बलं यशो वित्तं प्रजां कीर्तिमनामयम् ॥ ९ ॥
स्वाध्यायपुण्यमतुलं पूतः प्राप्नोति चाक्षयम् ।
अशक्तस्तु जपेद् युक्तस्त्रिशद् वैखानसीर्ऋचः[4] ॥ १० ॥
सप्तर्षिभिश्च याः प्रोक्ताः पवित्रस्य च याः पराः ।
ऋचां द्विषष्टिः प्रोक्तेयं पवस्वेत्यृषिसत्तमैः[5] ॥ ११ ॥
सर्वकल्मषनाशाय पावनाय शिवाय च ।
स्वादिष्ठयेति सूक्तानां सप्तषष्टिरिहोदिता ॥ १२ ॥
दशोत्तराण्यृचांश्चैव पावमानीः शतानि षट् ।

---

1. ऋ० ९. १-६७. 2. ऋ० ९. ५८. 3. ऋ० ९. ६७. ३१; ३२. 4. ऋ० ९. ६६. 5. ऋ० ९. ६६. १-३०; ६७. १-३२.

एतज्जुह्वन् जपंश्चैव घोरं मृत्युभयं जयेत् ॥ १३ ॥
व्याधिभ्यः परिमोक्षं च लभते नात्र संशयः ।
प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम् ॥ १४ ॥
जपंस्तरत्समन्दीयं प्रविश्यापस्त्र्यहाच्छुचिः ।
पावमानं परं ह्येतद् रपसामपनोदनम् ॥ १५ ॥
प्राणानायम्य च ध्यायेदन्ते देवान् पितॄन् ऋषीन् ।
उपोष्याज्यं च जुहुयादग्निं सोमं च पूजयेत् ॥ १६ ॥
सरस्वतीं चार्चयीत पयोम्बुमधुसर्पिषा ।
आध्यात्मिकं पवित्रं ते सूक्तं जप्त्वाऽऽप्लुतः शुचिः ॥ १७ ॥
गतिमिष्टामवाप्नोति विन्दते चेह वृद्धयः ।
मण्डलं पावमानं तु जपेल्लक्षमुपोषितः ॥ १८ ॥
नाशयेद् ब्रह्महत्यां वै वसिष्ठवचनं यथा ।
ना नानमिति सूक्तानि अन्तकाले जपेत् सकृत् ॥ १९ ॥
जप्त्वा चैव परं स्थानममृतत्वं च गच्छति ।
आपो हि ष्ठेति नियतः प्रयुञ्जीत सदा द्विजः ॥ २० ॥
स्नानार्थं शुद्धिकामस्तु जपेत त्रिः समाहितः ।
अप्सु चैव निमज्जित्वा त्रिः पठेत् सुसमाहितः ॥ २१ ॥
ब्रह्महा तु कपालेन खट्वाङ्गी चीरसंवृतः ।
चरेद् द्वादश वर्षाणि स्वकर्म परिकीर्तयन् ॥ २२ ॥
अजपन् मनसैवैतदापो हि ष्ठेति संस्मरेत् ।
ऊर्द्ध्वं तु पञ्चमाद्वर्षाज्जपेदेव सहस्रशः ॥ २३ ॥
अपरस्तु त्रिसाहस्रो जपः स्यात्प्रत्यहं सदा ।
पूर्णे तु द्वादशे वर्षे ब्रह्महा विप्रमुच्यते ॥ २४ ॥
समेत्य ब्राह्मणान् ब्रूयुरथ तं चरितव्रतम् ।
अचरितं भवेत्किञ्चिन्मिथ्यावादी पतेत्पुनः ॥ २५ ॥
दशावरान् दश परान् हन्यास्त्वमनृतं वदन् ।
ओं भो इति वदेद्विप्रैरनुज्ञातः शुचिर्जपेत् ॥ २६ ॥
स्थालीपाकं च कुर्वीत सोऽग्नये व्रतचारिणे ।
एवं स मुच्यते पापात् सावित्रीं प्रतिपद्य च ॥ २७ ॥

1. ऋ० ६. ८३. 2. ऋ० मण्डल ६. 3. ऋ० ६. ११२-११४. 4. ऋ० १०. ६.

ब्रह्मघ्ना तु पुरा शक्रस्त्वाष्ट्रं हत्वा त्वृषिं प्रभुम् ।
सिन्धुद्वीपस्तमेताभिरभिषिच्य व्यमोचयेत् ॥ २८ ॥
ब्रह्मस्वं च गुरोर्द्रव्यं स्तेयं कृत्वा जपन्निमाः ।
अनेनैव विधानेन षड्भिर्वर्षैः प्रमुच्यते ॥ २९ ॥
ब्रह्महा च सुरापश्च नियमेन जपन्निमाः ।
अनेनैवोपचारेण ब्रह्मन्न इव मुच्यते ॥ ३० ॥
ब्राह्मणस्य रुषोद्यम्य जपेदेता निपात्य च ।
त्र्यहं निपात्योपवसेदेकाहमवगूर्य च ॥ ३१ ॥
शोणितं तु प्रहारेण उत्पाद्य स कथञ्चन ।
त्रिरात्रमेवोपवसेज्जपेदेताः प्रसाद्य तम् ॥ ३२ ॥
प्रातरुत्थाय सततं कुर्यान्मार्जनमात्मनः ।
रात्रौ कृतस्य पापस्य अविज्ञातस्य निष्कृतिः ॥ ३३ ॥
सायं च नित्यमेताभिः कुर्यान्मार्जनमात्मनः ।
दिवा कृतस्य पापस्य अविज्ञातस्य निष्कृतिः ॥ ३४ ॥
उपतिष्ठेत राजानं यमं सूक्तेन वै द्विजः ।
स्थालीपाकं च कुर्वीत पञ्चयोर्यमदैवतम् ॥ ३५ ॥
अष्टम्यां च चतुर्दश्यां यजेत हविषा यमम् ।
परेयिवांसमित्येतत्सूक्तमत्र[1] प्रयोजयेत् ॥ ३६ ॥
पुरायुषः प्रमीयेत न जातु स कथञ्चन ।
प्रीयतेऽस्य यमो राजा स्मृतिं चान्ते प्रयच्छति ॥ ३७ ॥
धर्मराजाय स्वाहेति मन्त्रान्ते जुहुयाद्धविः ।
वैशाख्यां पौर्णमास्यां तु कर्म नित्यं प्रयोजयेत् ॥ ३८ ॥
अयने पर्वसु स्नात्वा यः प्रदद्यात्तिलोदकम् ।
यमाय सगणायैव तद्भयं न स विन्दते ॥ ३९ ॥
मृत्युमेव प्रपद्येत परं मृत्यो[2] जपन् द्विजः ।
नक्तभोजी मिताहारः परिसंवत्सरं सदा ॥ ४० ॥
नैनं पुराऽयुषो मृत्युर्नयते ससुतप्रजम् ।
फलाहारो जयेन्मृत्युं त्रिभिर्वर्षैर्मिताशनः ॥ ४१ ॥

---

1. ऋ० १०. १४ 2. ऋ० १०. १८.

षष्ठे काले तु भुञ्जीत फलं मूलमथापि वा ।
स्थानासनाभ्यां विहरेदुदके शिशिरे वसेत् ॥४२॥
ग्रीष्मे पञ्चतपास्तु स्याद् वर्षास्वभ्रावकाशकः ।
एवं युक्तो जयेन्मृत्युं रोगेभ्यश्च प्रमुच्यते ॥४३॥
भ्रातुर्भार्यामपुत्रस्य सन्तानार्थं मृते पतौ ।
देवरोन्वारुरुक्षन्तीमुदीर्ष्वेति[1] निवर्तयेत् ॥४४॥
ऋतुकाले तु सम्प्राप्ते घृताभ्यक्तोऽथ वाग्यतः ।
एकमुत्पादयेत्पुत्रं न द्वितीयं कथञ्चन ॥४५॥
दशाक्षरन्तु शान्त्यर्थं भद्रं नः[2] इति संस्मरेत् ।
नित्यं जपेच्छुचिर्भूत्वा मानसं विन्दते सुखम् ॥४६॥
फलाहारो भवेन्मासं मासं चापः पिबेत्ततः ।
वायुभक्षो भवेन्मासं जपन्नेतत्सहस्रशः ॥४७॥
मनसैवास्य सिद्ध्यन्ति सर्वे कामाः समीहिताः ।
दिव्यान् पश्यति गन्धर्वान् सिद्धान् पश्यति चारणान् ॥४८॥
अन्तर्धानं व्रजत्यस्माल्लोकादाकाशगो भवेत् ।
दूरात्पश्यति दूराच्च शृणोति परमेष्ठिवत् ॥४९॥
प्र देवत्रेति[3] नियतो जपेत मरुधन्वसु ।
प्राणान्तिके भये प्राप्ते क्षिप्रमम्भः स विन्दति ॥५०॥
बैभीदकांस्तु त्रीनक्षान् गन्धैः समभिवासयेत् ।
पुष्पैरवकिरेच्चैनान् स्थापयित्वा विहायसि ॥५१॥
संहृत्य पादौ तां रात्रीं तिष्ठन्नक्षस्तुतिं जपेत् ।
प्रावेपा मा[4] ऋचं त्वेतां मनसैव जपेन्निशि ॥५२॥
व्युष्टायामुदिते सूर्ये जपन्नादेवनं व्रजेत् ।
एतामेव जपेन्नित्यं जयत्यन्यैर्न जीयते ॥५३॥
यमेव जेतुमिच्छेत स्पृष्ट्वा मूर्द्धनि तं जपेत् ।
सूक्तशेषं जयत्यन्यान् जीयते न स केनचित् ॥५४॥
अबुध्रमुषासानक्तेत्येते[5] स्वस्त्ययने जपेत् ।
नमो मित्रस्य वरुणस्य चक्षसे[6] इति नित्यशः ॥५५॥

1. ऋ० १०. १८. ८. 2. ऋ० १०. २०. १. 3. ऋ० १०. ३०. 4. ऋ० १०. ३४. 5. ऋ० १०. ३५-३६. 6. ऋ० १०. ३७.

अस्यैव चोत्तमर्गेका ययैनोभ्य: प्रमुच्यते ।
तयाज्यं जुहुयान्नित्यमेनोभ्यो विप्रमुच्यते ॥५६॥
दिवस्परीति[1] सूक्तन्तु जपेच्छ्रद्धासमन्वित: ।
सर्वत्र लभते श्रद्धां श्रद्धाकाम: समाहित: ॥५७॥
मा प्र गामेति[2] च जपेत्समूढो गहने पथि ।
स्वस्तिमानेति पन्थानं विन्दते च परं सुखम् ॥५८॥
क्षीणायुरिति मन्येत यं कञ्चित्सुहृदं प्रियम् ।
यत्ते यममिति[3] स्नातस्तस्य मूर्धानमालभेत् ॥५९॥
सहस्रकृत्व: पञ्चाहं जपेदायुर्लभेत स: ।
घृतेन सिन्धुद्वीपस्य[4] सूक्तेनैनं प्रलेपयेत् ॥६०॥
संविशन शयने नित्यमेतं मन्त्रं जपेत वै ।
पुत्रान् भार्यां प्रियं चान्यमात्मानं संस्पृशेत्तत: ॥६१॥
जीवावृत्तिं प्रयुञ्जीत नित्यमेतां घृतेन तु ।
स्रोतांस्यभ्यज्य सर्वाणि सुखी भवति विज्वर: ॥६२॥
इदमित्थेति[5] मन्त्रोयं सहस्रसनिरुच्यते ।
अर्धमासं हविष्यान्नमर्धमासं पय: पिबेत् ॥६३॥
उपोष्य चापरं पक्षमरण्ये स्थण्डिले शुचौ ।
औदुम्बरेध्मं प्रज्वाल्य जुहुयात्पावके घृतम् ॥६४॥
स्रुक्स्रुवौ चमसश्चैव सर्वमौदुम्बरं भवेत् ।
हुत्वाहुतिसहस्रं तु तेन कामेन युज्यते ॥६५॥
अमोघमेव कर्मैतज्जानीयात्सिद्धिमेव तु ।
व्यर्थमप्यर्द्धमेवैतत्फलस्यास्य प्रयच्छति ॥६६॥
चतुष्पथे चान्नकाम आदित्याभिमुखो घृतम् ।
जुहुयाद्धनकामस्तु सहस्रं भोजयेद् द्विजान् ॥६७॥
पशुकामो जपेद् गोष्ठे जुहुयाद्वाप्युपोषित: ।
विधिनाऽनेन नियत: सहस्रं विन्दते पशून् ॥६८॥
लोहलोहितहेमानां कारयेत्त्रिवृतं मणिम् ।
सहस्रं समिधां चैव सम्पाताभिहुतो भवेत् ॥६९॥

---

1. ऋ० १०. ४५. 2. ऋ० १०. ५७. 3. ऋ० १०. ५८. 4. ऋ० १०. ६. 5. ऋ० १०. ६१.

कृत्वा सहस्रसम्पातं शिरसा धारयेत्तु तम् ।
पाणिना वा शुचिर्भूत्वा सहस्रानुचरो भवेत् ॥७०॥
परावत:[1] स्वस्त्ययनं स्नातकस्य विधीयते ।
स्वर्गकामश्च तं नित्यं जपेत नियतव्रतः ॥७१॥
बृहस्पते प्रथमम्[2] इति नित्यं ज्ञानस्तुतिं जपेत् ।
ज्ञानवान् भवति श्रीमाननन्तां विन्दते श्रियम् ॥७२॥
अलक्ष्मीनाशनार्थन्तु पयोभक्षो भवेद् द्विजः ।
वयः सुपर्णा[3] इत्येतां जपन्वै विन्दते श्रियम् ॥७३॥
तमसा प्रावृतो यस्तु मन्येतात्मानमात्मनि ।
अश्रिया वाप्यथाविष्टो जपन्नेतां प्रमुच्यते ॥७४॥
अक्षिणी प्रातरुत्थाय विमृजीतैतया सदा ।
चक्षुष्मान्भवति श्रीमानलक्ष्मीं च प्रबाधते ॥७५॥
न तं विदाथ[4] इत्येतां तु जपन्विप्रः समाहितः ।
विहाय कल्मषं सर्वं ब्रह्माभ्येति सनातनम् ॥७६॥
अनया पर्वसु स्नात्वा यः प्रदद्यात्तिलोदकम् ।
यमाय सगणायैव तद्वयं न स विन्दति ॥ ७७ ॥
यस्ते मन्यो[5] इति सदा सपत्नघ्ने त्विमे जपेत् ।
घृतेनाभिहुतं चाभ्यां धारयेदायसं मणिम् ॥ ७८ ॥
जुहुयादायसं शङ्कुमाभ्यामेव चतुर्दशीम् ।
खादिरे सुसमिद्धेऽग्नौ सपत्नान् प्रतिबाधते ॥ ७९ ॥
यथा हि परमं ब्रह्म गुह्यं पावनमद्भुतम् ।
तथा संवननं ह्यं नह्यस्माद्विद्यते परम् ॥ ८० ॥
उपोष्य द्वादशाहानि जपन्नेतमृषिं सदा ।
तन्मनाः प्रयतः स स्यात् त्रिरह्नोऽभ्युपयादपः ॥ ८१ ॥
अन्ते तु द्वादशाहस्य शुचौ देशे समाहितः ।
पुंसः प्रतिकृतिं कुर्याद् भूमौ पांसुमयीं तथा ॥ ८२ ॥
तस्या हृदयदेशन्तु समाक्रम्य जपेदृषिम् ।
अमोघं कर्म जानीयादहोरात्रे गते सति ॥ ८३ ॥

1. ऋ० १०. ६३. 2. ऋ० १० ७१. 3. ऋ० १०. ७३. ११. 4. ऋ० १०. ८२. ७. 5. ऋ० १०. ८३-८४.

त्र्यहेण धनिनं वैश्यं चतूरात्रेण क्षत्रियम् ।
राजानं पञ्चरात्रेण षड्रात्रेण द्विजोत्तमम् ॥ ८४ ॥
तपस्विनं सप्तरात्राज्जपेद् भुञ्जीत चैव तम् ।
अपि वोपोषितः स्नातो जपेदेतत्सदा स्थितः ॥ ८५ ॥
य इच्छेदात्मनः कर्तुं हीनां तु परिवर्जयेत् ।
सहस्रसम्पातहुतं बिल्वानां चूर्णमावपेत् ॥ ८६ ॥
उदपाने वशं नेतुं तं जनं क्षिप्रमानयेत् ।
मातर्यात्मनि पुत्रेषु पितृभ्रातृसुहृत्सु च ॥ ८७ ॥
हृद्यमेतत्प्रयुञ्जीत शिरसा धारयेद्गुडम् ।
सुमित्रं तु परिष्वज्य मूर्धन्याघ्राय चात्मजम् ॥ ८८ ॥
हृद्यमेतत्प्रयुञ्जीत शान्त्यर्थाय सुखाय च ।
असंसिद्धे संवनने पांसुप्रतिकृतिं पथि ॥ ८९ ॥
प्रज्वाल्य जुहुयादग्निं घृतेन ब्राह्मणो यदि ।
क्षत्रियस्य तु तैलेन सार्षपेण विशामपि ॥ ९० ॥
आयसीं वै प्रतिकृतिमग्निमध्ये निधापयेत् ।
तां च प्रज्वलितां मत्वा जुहुयात्तन्मनाः शुचिः ॥ ९१ ॥
उग्रेण मनसा हन्यात्क्रुद्धश्च जुहुयाद् घृतम् ।
यथा यथा प्रज्वलिते हूयते जातवेदसि ॥ ९२ ॥
दीप्ता प्रतिकृतिर्विप्रस्तथा स्वं वशमेष्यति ।
श्मशानदग्धपांसूनां कुर्याद् वेदिं विलक्षणाम् ॥ ९३ ॥
वैभीतकेध्मे ज्वलिते लोहप्रतिकृतिं न्यसेत् ।
अर्धरात्रे स्थिते तैलं सार्षपं लवणान्वितम् ॥ ९४ ॥
तत्र शरमयं कुर्यात्प्रस्तरं प्रतिलोमतः ।
त्रिषु शङ्कुषु चासीनो जुहुयादुग्रदर्शनः ॥ ९५ ॥
मुक्तकेशो वधं प्रेप्सुरचिरेण प्रसादयेत् ।
अथवाभिचरेदेवं जुहुयादात्मशोणितम् ॥ ९६ ॥
वशं नयति राजानं क्षिप्रं जनपदं पुरम् ।
पुष्टिकर्मापि कर्तव्यं हृद्येनोक्तं यतात्मना ॥ ९७ ॥
अनागसि न कुर्वीत ब्राह्मणो वधसंयुतम् ।
सरूपवत्सायाश्च गोः पयसा साधयेच्चरुम् ॥ ९८ ॥

सहस्रसम्पातहुतं पाययेद्वत्समग्रजम् ।
सहस्रानुचरो वत्सः स स्याद्रोगैर्विवर्जितः ॥ ९९ ॥
गाश्चैव पाययेत्ताश्च भवन्ति व्याधिवर्जिताः ।
पुत्रांश्च प्राशयेन्नित्यं प्रियानन्यांश्च सज्जनान् ॥१००॥
निरामयाश्च स्निग्धाश्च भवन्ति विगतज्वराः ।
स्त्रियं चेदभिमन्येत तस्याः संवननं महत् ॥१०१॥
व्रीहीणां नखभिन्नानां तण्डुलान् सूक्ष्मचूर्णितान् ।
सहस्रसम्पातहुतान् स्वेदयेत्कुशलोऽग्निना ॥१०२॥
तेन प्रतिकृतिं कुर्यात्तां ध्यात्वा मनसा स्त्रियम् ।
अक्तां सर्षपतैलेन जुहुयादङ्गशश्च ताम् ॥१०३॥
पादौ प्रथमतश्छिन्द्यात् फडित्यग्नौ निधापयेत् ।
अथ जङ्घे जानुनी च ऊरू बाहू ततः शिरः ॥१०४॥
छित्त्वा हृदयदेशन्तु हृदये स्वे निवेशयेत् ।
जपन्निममृषिं विप्रः स्त्री वशं साधिगच्छति ॥१०५॥
नैतत्परिगृहीतासु न साध्वीषु कथञ्चन ।
न धर्मव्रतशीलासु कुर्वीत द्विजसत्तमः ॥१०६॥
कामं परिगृहीतासु हीनवर्णासु यश्चरेत् ।
पतिमस्या गुणीकुर्यात्पूर्वं पश्चात्तु तां स्त्रियम् ॥१०७॥
भुक्त्वा वा पायसं सद्यश्छर्दयित्वा निधापयेत् ।
तच्चूर्णं कृष्णजायायै देयं संवननं स्मृतम् ॥१०८॥
महावृक्षफलान्येवमयुग्मान्यभिमन्त्रयेत् ।
तेषां युग्मानि भुञ्जीत स्वयमर्धानि शेषयेत् ॥१०९॥
तानि दद्याद्यमिच्छेत्तु वशीकर्तुं जपन्नृषिम् ।
सुहृद्भूत्वा सुहृद् यस्य देयं संवननं स्मृतम् ॥११०॥
एकैकमभिरूपन्तु हृद्यसूक्ताद्यतः पुनः ।
कर्माणि त्वभिरूपाणि कुर्याद् यस्तु यथेच्छति ॥१११॥
पराकदासस्य विधिं हृद्येनोक्तं विदुर्बुधाः ।
स्त्रीणां संवननं चैतत् पुंसामपि विधीयते ॥११२॥
द्वेष्यं तु ज्ञातिनामेव जयश्चैव सदा युधि ।
खादिरं कारयेच्छङ्कुं हृदि तं संनिवेशयेत् ॥११३॥

कृत्वा प्रतिकृतिं पूर्वं पांसुभिर्वाथवा तुषैः ।
इषुमप्यनुमन्त्र्यैव संग्रामं सम्प्रकल्पयेत् ॥११४॥
रिपुघ्नमेतज्जानीयात्प्रयुक्तमपराजितम् ।
पराकृदासद्द्वेष्यार्थं हृद्यं संवननं स्मृतम् ॥११५॥
चिन्तयन्मनसाप्येते सूक्ते सिद्धिं नियच्छति ।
सूर्यायै भाववृत्तं तु श्रावयेत्कन्यकां पिता ॥११६॥
अनुरूपं सुसदृशं भर्तारं तेन विन्दति ।
इमामिति[2] जपेत्कन्या नाभिमालभ्य नित्यशः ॥११७॥
एवमेव जपेद्भर्ता ततो दीर्घायुषौ तु तौ ।
स्नापयेदभिरूपैश्च भ्राता कन्यां पितापि वा ॥११८॥
दशपुत्रवती भवेन्नच भर्ता वियुज्यते ।
सम्राज्ञीति[3] जपेन्मूर्ध्नि कन्यामालभ्य नित्यशः ॥११९॥
श्वश्रूश्वशुरदेवरैर्ननान्द्रा वापि पूज्यते ।
इन्द्राण्याः[4] कृतसंवादं स्नाने सूक्तं प्रयोजयेत् ॥१२०॥
नववर्गोत्तमयुतं पतिसौभाग्यपुत्रदम् ।
जलपुष्पोत्करयुते चित्रकुम्भसमावृते ॥१२१॥
कर्तव्योत्र तथा यागः सोमगन्धर्वत्रह्निनाम् ।
भगायाप्सरसां चैव यज्ञाधिपतयेपि च ॥१२२॥
इन्द्राण्यै देवपत्नीनां रतिप्रद्युम्नयोस्तथा ।
नदीसलिलसम्पूर्णैः पञ्चगव्यसमावृतैः ॥१२३॥
हुत्वाग्निं स्नापयेत्कन्यां स्थितां देशे तु दक्षिणे ।
प्रियङ्गुवटनागानां कषायोद्घृष्टकेसरम् ॥१२४॥
सम्पाताभिहुतं कृत्वा सर्वौषधिसमन्वितम् ।
अभिमन्त्र्येह सूक्तान्ते नवभिस्तु वि हीति[5] वै ॥१२५॥
स्थेयाभिरद्भिः पूर्णेन अभिषिञ्चेदुपोषिताम् ।
याः पतिघ्न्यस्त्रियस्तन्व्यः शाम्यन्ते तास्त्वनेन वै ॥१२६॥
स्नापयेदाहनस्याभिर्विद्याद् यां विप्रव्राजिनीम् ।
सूक्तादुपोद्धरेदेनं न सेश[6] इति तु द्वृचम् ॥१२७॥

1. ऋ० १०. ८५. ६-१३. 2. ऋ० १०. ८५. ४५. 3. ऋ० १०. ८५. ४६. 4. ऋ० १०. ८६. 5. ऋ० १०. ८६. १-६. 6. ऋ० १०. ८६. १६-१७.

उपदिष्टोयमेकेषां पुंसः कर्मणि पौरुषे ।
रक्षोहणं[1] वाजिनमित्येतद्रक्षोहणं जपेत् ॥१२८॥
अग्निं प्रज्वाल्य चैतेन उपतिष्ठेत नित्यशः ।
आज्याहुतीश्च जुहुयात् तेन रक्षांसि बाधते ॥१२९॥
एतद्रक्षोहणं शान्तिः परमैषा प्रकीर्तिता ।
हविष्पान्तीयमित्येतत्सूक्तमत्र प्रयोजयेत् ॥१३०॥
गर्हितान्नाद्ययोगे च हविष्पान्तीयमभ्यसेत् ।
पवित्रं परमं ह्येतद् ध्यातव्यमप्यभीक्ष्णशः ॥१३१॥
आदित्ये दृष्टिमास्थाप्य षण्मासान्नियतोऽभ्यसेत् ।
देवयानं स पन्थानं पश्यत्यादित्यमण्डले ॥१३२॥
विद्या वैश्वानरी चास्य स्वकायस्था प्रकाशते ।
हविष्पान्तीयमभ्यस्य[2] सर्वपापैः प्रमुच्यते ॥१३३॥
इन्द्रं स्तवेति[3] सूक्तं तु जपेच्छत्रुनिबर्हणम् ।
पवित्राणां पवित्रं तु गुह्यं पावनमद्भुतम् ॥१३४॥
शुक्लपक्षे शुभे वारे सुनक्षत्रे सुगोचरे ।
द्वादश्यां पुत्रकामाय चरुं कुर्वीत वैष्णवम् ॥१३५॥
दम्पत्योरुपवासः स्याद् एकादश्यां सुरालये ।
ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम् ॥१३६॥
चरुं पुरुषसूक्तेन[4] श्रपयेत्पुत्रकाम्यया ।
प्राप्नुयाद्वैष्णवं पुत्रमचिरात्सन्ततिक्षमम् ॥१३७॥
द्वादश द्वादशीः सम्यक् पयसा निर्वपेच्चरुम् ।
यः करोति सहस्रं स्याद् याति विष्णोः परं पदम् ॥१३८॥
हुत्वाग्निं विधिवत् सम्यग् ऋग्भिः षोडशभिर्द्विजः ।
कृताञ्जलिपुटो भूत्वा स्तवं ताभिः प्रयोजयेत् ॥१३९॥
केशवं मार्गशीर्षे तु पौषे नारायणं स्मृतम् ।
माधवं माघमासे तु गोविन्दं फाल्गुने तथा ॥१४०॥
चैत्रे चैव तथा विष्णुं वैशाखे मधुसूदनम् ।
ज्येष्ठे त्रिविक्रमं विद्यादाषाढे वामनं विदुः ॥१४१॥

---

1. ऋ० १०. ८७. 2. ऋ० १०. ८८. 3. ऋ० १०. ८९. 4. ऋ० १०. ९०.

श्रावणे श्रीधरं विद्याद्धृषीकेशं ततः परे ।
आश्विने पद्मनाभं तु दामोदरञ्च कार्त्तिके ॥१४२॥
द्वादशैतानि नामानि ऋष्यश्रृङ्गोऽब्रवीन्मुनिः ।
पूजयेन्मासनामभिः सर्वान्कामान् समश्नुते ॥१४३॥
आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम् ।
धनवन्तं प्रजावन्तं धार्मिकं सात्त्विकं तथा ॥१४४॥
समिधोऽश्वत्थवृत्तस्य हुत्वाग्निं जुहुयात्पुनः ।
उपस्थानं हुताशस्य ध्यात्वार्च्य मधुसूदनम् ॥१४५॥
हविर्होमं ततः कुर्यात्प्रत्यृचं वाग्यतः शुचिः ।
सूक्तेन जुहुयादाज्यमादावन्ते च पूर्ववत् ॥१४६॥
हविश्शेषं नमस्कृत्वा नारी नारायणं पतिम् ।
भक्षयित्वा हविश्शेषं लब्धाशीः संविशेत् चराम् ॥१४७॥
ततस्तु कर्म कृत्वेदं कर्तव्यं द्विजतर्पणम् ।
द्वितीया स्त्री निवर्तेत यावद् गर्भं न विन्दति ॥१४८॥
अपुत्रा मृतपुत्रा वा या च कन्यां प्रसूयते ।
क्षिप्रं सा जनयेत्पुत्रमृष्यश्रृङ्गो यथाऽब्रवीत् ॥१४९॥
अर्चनं सम्प्रवक्ष्यामि विष्णोरमिततेजसः ।
यत्कृत्वा मुनयः सर्वे ब्रह्मनिर्वाणमाप्नुयुः ॥१५०॥
अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ।
षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् ॥१५१॥
अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम् ।
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः ॥१५२॥
आपो ह्यायतनं तस्य तस्मात्तासु सदा हरिः ।
तस्य सर्वगतत्वाच्च स्थण्डिले भावितात्मनाम् ॥१५३॥
दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥१५४॥
आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता ।
पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः ॥१५५॥
नारायण ! महाबाहो ! श्रृणुष्वैकमनाः प्रभो !
वक्ष्ये पुरुषसूक्तस्य विधानं त्वर्चनं प्रति ॥१५६॥

अग्निकार्यं जपविधिं स्तोत्रं चैव सदात्मकम् ।
स्नात्वा यथोक्तविधिना प्राङ्मुखः शुद्धमानसः ॥१५७॥
प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे ।
तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत् ॥१५८॥
पञ्चमीं वामजानुनि षष्ठीं वै दक्षिणे न्यसेत् ।
सप्तमीं वामकट्यां तु अष्टमीं दक्षिणे कटौ ॥१५९॥
नवमीं नाभिमध्ये तु दशमीं हृदये न्यसेत् ।
एकादशीं कण्ठदेशे द्वादशीं वामबाहुके ॥१६०॥
त्रयोदशीं दक्षिणे वाहावास्ये चैव चतुर्दशीम् ।
अक्ष्णोः पञ्चदशीं चैव षोडशीं मूर्ध्नि विन्यसेत् ॥१६१॥
एवं न्यासविधिं कृत्वा पश्चात्पूजां समारभेत् ।
यथा देहे तथा देवे न्यासं कृत्वा विधानतः ॥१६२॥
मन्त्रन्यासं पुरा कृत्वा स्वदेहे देवतासु च ।
गायत्र्योंकारं न्यस्ताङ्गः पूजयेद्विष्णुमव्ययम् ॥१६३॥
उच्छ्वासावाहने नस्तः स्थिरायामुद्भवार्चने ।
अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेद् द्वयम् ॥१६४॥
उच्छ्वासावाहने नस्तः स्थावरे वै यथा तथा ।
शालिग्रामार्चनेनैव ह्यावाहनविसर्जने ॥१६५॥
शालिग्रामे तु भगवानादिभूतो यथा हरिः ।
न तथान्यत्र सूर्यादौ वैकुण्ठे वापि सर्वगः ॥१६६॥
आद्ययावाहयेदेवमृचा तु पुरुषोत्तमम् ।
द्वितीययासनं दद्यात्पाद्यं चैव तृतीयया ॥१६७॥
अर्घ्यं चतुर्थ्या दातव्यं पञ्चम्याचमनीयकम् ।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च ॥१६८॥
यज्ञोपवीतमष्टम्या नवम्या चानुलेपनम् ।
पुष्पं दशम्या दातव्यमेकादश्या तु धूपकम् ॥१६९॥
द्वादश्या दीपकं दद्यात् त्रयोदश्या निवेदनम् ।
चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणम् ॥१७०॥
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ।
दक्षिणां तु यथाशक्त्या षोडश्या तु प्रदापयेत् ॥१७१॥

ततः प्रादक्षिण्यं कृत्वा जपन्कुर्यात्समाहितः ।
यथाशक्ति जपित्वा तु सूक्तं तस्य निवेदयेत् ॥१७२॥
देवस्य दक्षिणे पार्श्वे कुण्डं स्थण्डिलमेव वा ।
कारयेत्प्रथमेनैव द्वितीयेन तु प्रोक्षणम् ॥१७३॥
तृतीयेनाग्निमादध्याच्चतुर्थेन समिन्धनम् ।
पञ्चमेनाज्यश्रपणं चरोश्च श्रपणं तथा ॥१७४॥
षष्ठेनैवाग्निमध्ये तु कल्पयेत्पाद्यमासनम् ।
चिन्तयेद्देवदेवेशं कालानलसमप्रभम् ॥१७५॥
ततो गन्धं च पुष्पं च धूपदीपनिवेदनम् ।
अनुज्ञाप्य ततः कुर्यात्सप्तम्यादि यथाक्रमम् ॥१७६॥
समिधस्तावतीः पूर्वं जुहुयादभिघारिताः ।
ततो घृतेन जुहुयाच्चरुणा च ततः पुनः ॥१७७॥
एवं हुत्वा ततश्चैव अनुज्ञाप्य यथाक्रमम् ।
अग्नेर्भगवतस्तस्य समीपे स्तोत्रमुच्चरेत् ॥१७८॥
यतं ते पुण्डरीकाक्ष ! नमस्ते विश्वभावन !
नमस्तेस्तु हृषीकेश ! महापुरुष ! पूर्वज ! ॥१७९॥
देवानां दानवानाञ्च सामान्यमधिदैवतम् ।
सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ॥१८०॥
एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा ।
अव्यक्तश्चानुमन्ता च गुणमायासमावृतः ॥१८१॥
संसारसागरं घोरमनन्तं क्लेशभाजनम् ।
त्वमेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥१८२॥
न ते रूपं न चाकारो नायुधानि न चास्पदम् ।
तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥१८३॥
नैव किञ्चित्परोक्षं ते प्रत्यक्षोसि न कस्यचित् !
नैव किञ्चिदसाध्यं ते नच साध्योसि कस्यचित् ॥१८४॥
कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ।
योगिनां परमा सिद्धिः ! परमं ते पदं विदुः ॥१८५॥
अहं भीतोऽस्मि देवेश ! संसारेऽस्मिन्महाभये ।
त्राहि मां पुण्डरीकाक्ष ! न जाने परमं पदम् ॥१८६॥

कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत !
शरीरे जगतश्चासि वर्तते मे महद् भयम् ॥१८७॥
त्वत्पादकमलादन्यत्र मे जन्मान्तरेष्वपि ।
विज्ञानं यदिदं प्राप्य यदिदं स्थानमर्जितम् ॥१८८॥
जन्मान्तरेपि मे देव ! मा भूदस्य परिक्षयः ।
दुर्गतावपि ज्ञातस्य त्वद्गतो मे मनोरथः ॥१८९॥
यदि नाशं न विन्देत तावतास्मि कृती सदा ।
कामये विष्णुपादौ तु सर्वजन्मसु केवलम् ॥१९०॥
पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्करम् ।
आत्मज्ञानमिदं पुण्यं योगध्यानमिदं परम् ॥१९१॥
फलाहारो भवेन्मासं पश्यत्यात्मानमात्मनि ।
फलानि भुक्त्वोपवसेन्मासमद्भिश्च वर्तयेत् ॥१९२॥
अरण्ये निवसेन्नित्यं जपन्नेतमृषिं सदा ।
त्रिस्त्रिषवणकालेषु स्नायादप्सु समाहितः ॥१९३॥
आदित्यमुपतिष्ठेत सूक्तेनानेन नित्यशः ।
आज्याहुतीरनेनैव हुत्वैतं चिन्तयेदृषिम् ॥१९४॥
ऊर्ध्वं मासात्फलाहारस्त्रिभिर्वर्षैर्जयेद्दिवम् ।
तद्भक्तस्तन्मना युक्तो दश वर्षाण्यनन्यभाक् ॥१९५॥
साक्षात्पश्यति तं देवं नारायणमनामयम् ।
ब्राह्ममत्यन्तयत्नेन स्रष्टारं जगतोऽव्ययम् ॥१९६॥
गृहस्थधर्मे वर्तेत न्यायक्लृप्तः शुचिव्रतः ।
एतं देवं चिन्तयेत नारायणमनामयम् ॥१९७॥
अर्धरात्रे त्यक्तनिद्र उत्थाय शुचिर्वाग्यतः ।
सम्प्रसुप्तेषु भूतेषु योगं युञ्जीत योगवित् ॥१९८॥
ऋज्वासीनः समे देशे निवाते शब्दवर्जिते ।
सव्यं पार्श्वं दक्षिणस्य जानुनि श्लेषयेत्ततः ॥१९९॥
संहृत्य दक्षिणं पार्श्वं सव्ये जानुनि यच्छति ।
ब्रह्माञ्जलिकृतः स्वस्थो योगसम्मीलितेक्षणः ॥२००॥
ओमित्युक्त्वा स्वं हृदयं चिन्तयेदविशङ्कितः ।
तत्रात्मानं समादध्यादिन्द्रियाणि मनस्तथा ॥२०१॥

न चेद् बुध्येत किञ्चान्यन्न पश्येच्छृणुयान्नच ।
न मनस्येद् यदा योगं तदा प्राप्तः स उच्यते ॥२०२॥
हृद्येतमृषिमभ्यसेत्पश्यन्निव यथाश्रुति ।
प्राणानायम्य चासीनो यावत्तं चिन्तयेदृषिम् ॥२०३॥
उच्छ्वसिष्यन्नधो नाभिं गमयित्वा मनस्तथा ।
उच्छ्वसेदेवमसकृत्तन्मना योगमुन्नयेत् ॥२०४॥
एवं हि युञ्जन्त्सामान्यं न पश्येच्छृणुयान्नच ।
तदा शनैर्नयेच्चेतो हृदयादूर्ध्वमेव तु ॥२०५॥
समौ तु जत्रू चास्यं च नासिकानयने भ्रुवौ ।
भ्रुवोर्मध्ये परं स्थानं तत्रैतद्धारयेत्स्थिरम् ॥२०६॥
ललाटदेशे धार्याथ मूर्धानं गमयेत्ततः ।
उच्छ्वसंश्च यथाकालं नाभिं गत्वोच्छ्वसेत्पुनः ॥२०७॥
एतत्परं स्थानमुक्तं ब्रह्मणः परमात्मनः ।
एवं युक्तो महात्मानमात्मानं प्रतिपद्यते ॥२०८॥
यदि स्यात्सुकृती शुद्धो यदि वा पापकृत्तमः ।
उपलभ्य परं ब्रह्म गतिं ज्ञात्वा भवेच्छुचिः ॥२०९॥
सर्वपापानुबद्धश्चेद् बुद्ध्वैतत्प्रयतो जपेत् ।
अभिजिज्ञासनादेव गच्छेत परमां गतिम् ॥२१०॥
धारणा तु पृथक्कार्या धर्मेणानेन नित्यशः ।
आदित्येऽग्नौ चन्द्रमसि वृक्षाग्रेषु च धारयेत् ॥२११॥
पर्वताग्रे समुद्रे वा यत्र वापि मनो रमेत् ।
न त्वेव विषयान्प्राप्य धारयीत कथञ्चन ॥२१२॥
बह्वत्र दुःखं जानीयात्प्रध्वंसे धारणाकृते ।
धार्मिकाणां कुले शुद्धे योगभ्रष्टोऽभिजायते ॥२१३॥
मूर्ध्नि ब्रह्म यदा विन्देत् तमेव ऋषिसत्तमम् ।
तदा मूर्ध्नः परं ज्योतिर्नक्षत्रपथमुन्नयेत् ॥२१४॥
योगी योगेश्वरं प्राप्य निर्द्वन्द्वः परमात्मवित् ।
सर्वत्रैवात्मनात्मानं पश्येदपिपरायणः ॥२१५॥
जपेच्चैव सदा स्नातः पवित्रमिदमुत्तमम् ।
अपि पातकसंयुक्तः कालेन सुकृती भवेत ॥२१६॥

तपःपरायणो नित्यं सत्यवागनसूयकः ।
जपन्नेतमृषिं विप्रः कालेन स वनी भवेत् ॥२१७॥
येन येन स कामेन जपेदिममृषिं सदा ।
स स कामः समृद्धः स्याच्छ्रद्दधानस्य कुर्वतः ॥२१८॥
होमं वाप्यथवा जाप्यमुपहारमथो चरुम् ।
कुर्वीत येन कामेन तत्सिद्धिमवधारयेत् ॥२१९॥
ज्ञातिश्रैष्ठ्यं महद्वित्तं यशो लोके परां गतिम् ॥
ज्ञानेन विप्रमोक्षं च तत्सिद्धिमवधारयेत् ॥२२०॥
ज्ञानगम्यं परं सूक्ष्मं व्याप्य सर्वमवस्थितम् ।
ग्राह्यमत्यन्तयत्नेन ब्रह्माभ्येति सनातनम् ॥२२१॥
सहस्रशीर्षेति सूक्तं सर्वकामफलप्रदम् ।
वेदगर्भशरीरेण स वै नारायणः स्मृतः ॥२२२॥
ब्रह्मेन्द्ररुद्रपर्जन्या अत्र सूक्ते व्यवस्थिताः ।
अत्रस्थमेतद् द्रष्टव्यं जगत्स्थावरजङ्गमम् ॥२२३॥
अनासादयमानोपि भक्तिं न परिहापयेत् ।
भक्तानुकम्पी भगवान् श्रूयते पुरुषोत्तमः ॥२२४॥
पूजार्थं तस्य देवस्य वन्यान्स्वयमुपार्जितान् ।
आरण्यकविधानेन निर्वपेत्प्रत्यहं चरुम् ॥२२५॥
नारायणाय स्वाहेति मन्त्रान्ते जुहुयाद्धविः ।
आ सहस्रात्ततश्चक्षुर्दिव्यं होतुर्ददाति सः ॥२२६॥
अपि वा चरुसहस्रं तन्त्रेणैकेन निर्वपेत् ।
यावन्तो वापि शक्यन्ते अह्ना सर्वान्त्समापयेत् ॥२२७॥
सहस्रस्येप्सितानां च कामानां लभते फलम् ।
पुरुषायुःसमायुक्तः सिद्धो वापि चरेन्महीम् ॥२२८॥
ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान्मकरकुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥२२९॥
एतत्तु यः पठति केवलमेव सूक्तं नारायणस्य चरणावभिवन्द्य वन्द्यौ ।
पाठेन तेन परमेण सनातनस्य स्थानं जरामरणवर्जितमेति विष्णोः ॥२३०॥
हविषाग्नौ जले पुष्पैर्ध्यानेन हृदये हरिम् ।
यजन्ति सूरयो नित्यं जप्येन रविमण्डले ॥२३१॥

बिल्वपत्रं शमीपत्रं पत्रं भृङ्गारकस्य च ।
मालतीकुशपद्मं च सद्यस्तुष्टिकरं हरेः ॥२३२॥
यन्नोपपद्यते किञ्चित्तं ध्यायेन्मनसैव तु ।
सम्पद्यते प्रासादात्तु देवदेवस्य चक्रिणः ॥२३३॥
पत्रैश्च पुष्पैश्च फलैश्च तोयैरक्रीतलब्धैश्च सदैव सत्सु ।
भक्त्यैकलभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते न यत्नः ॥२३४॥
इत्येवमुक्तः पुरुषस्य विष्णोरर्चाविधिः विष्णुकुमारनाम्ना ।
मुक्त्यैकमार्गप्रतिबोधनाय दृष्ट्वा विधानं त्विह नारदोक्तम् ॥२३५॥
या औषधीः[1] स्वस्त्ययनं जपेत नियतव्रतः ।
ओषधीश्च यजेन्नित्यं षण्मासानेव नित्यशः ॥२३६॥

इत्यृग्विधाने तृतीयोऽध्यायः ।

---

# चतुर्थोऽध्यायः ।

ओम् ।

इष्ट्वा शरदि वै रुद्रमोषधीश्च यजेत्तथा ।
तस्यामया न भवन्ति तथाजीर्णानि यानि च ॥ १ ॥
क्रियां तु सप्तरात्रेण सप्तकृत्वोभ्यसेत्ततः ।
प्रपद्येतौषधीं विप्रः सूक्तमेतज्जपन्त्सदा ॥ २ ॥
द्विषत्क्षेत्रादिहायध्वमिति विज्ञापयीत च ।
स्वक्षेत्रे वरुणमिष्ट्वा विन्दते भिषगोषधीः ॥ ३ ॥
वृष्टिकामो यताहारः प्रपद्येत बृहस्पतिम् ।
पायसेनोपहारेण होमेन च समन्वितः ॥ ४ ॥
बृहस्पते[2] प्रतीत्येतद् वृष्टिकामः प्रयोजयेत् ।
पर्जन्यं च नमस्कृत्य वृष्टिं विन्दति शोभनाम् ॥ ५ ॥
सर्वत्र तु परा शान्तिर्ज्ञेयोप्रतिरथस्त्वृषिः[3] ।
यमेव देशं गच्छेत शत्रुं वाप्यनुमन्त्रितः ॥ ६ ॥

---

1. ऋ० १०. ६७. 2. ऋ० १०. ६८. 3. ऋ० १०. १०३.

नाजित्वा विनिवर्तेत परं हि ब्रह्मणो बलम् ।
सर्वकामैर्जपेदेतत् सर्वकामसमृद्धये ॥ ७ ॥
संग्राममभ्युद्यताय राज्ञे चैतत्प्रयोजयेत् ।
सर्वान् विजयते शत्रून् न पराजीयतेऽपरैः ॥ ८ ॥
पथि स्वस्त्ययनं चैतत् तस्करेभ्यश्चरन् पथि ।
भूतोरगपिशाचेभ्यः सर्वेभ्यः परिरक्षति ॥ ९ ॥
भूतांशस्य[1] ऋषेः सूक्तं प्रजाकामः शुचिर्जपन् ।
अनुरूपां प्रजामाशु लभते नात्र संशयः ॥ १० ॥
स्थालीपाकेन नासत्यावश्विनौ तु यजेद् द्विजः ।
अनेनैवोपचारेण हुत्वाऽश्वाननुमन्त्रयेत् ॥ ११ ॥
पायसं कृशरामांसमोदनं दधिसक्तुकान् ।
कुल्माषांश्च करम्भांश्च फलानि विविधानि च ॥ १२ ॥
चित्रं माल्यं शुभान् गन्धान् अन्नपानानि यानि च ।
भक्ष्यं भोज्यं च पेयं च समाहृत्योदिते रवौ ॥ १३ ॥
भूतांशमभ्यसेत्तावद् यावदस्तमितो रविः ।
अर्धरात्रे त्वतिक्रान्ते ततोऽश्विभ्यां निवेदयेत् ॥ १४ ॥
दीर्घायुषं सरूपं च लभेत् पुत्रं सुवर्चसम् ।
रूपवांश्च भवेन्नित्यं भूतांशं योऽभ्यसेत्सदा ॥ १५ ॥
सर्वकामिकमित्येतमृषिं विद्याद् विचक्षणः ।
न वा उ देवा[2] इत्येतज्जपेत नियतव्रतः ॥ १६ ॥
अन्नं विन्दति सर्वत्र यत्र यत्रोपतिष्ठति ।
पाप्मोपहतमात्मानं यो मन्येत विचक्षणः ॥ १७ ॥
स जपेन्नियतो भूत्वा लघु मन्येत पाप्मना ।
वाचं प्रपद्येद् वाक्कामो जुहुदाशु जपन्निमाः ॥ १८ ॥
अहं रुद्रेभिरित्येतद्[3] वाङ्मी भवति पूजितः ।
न तमित्यष्टकं[4] सूक्तं वैश्वदेवं जपेन्मुनिः ॥ १९ ॥
कृत्स्नं तु कल्मषं हित्वा विश्वैर्देवैः सहासते ।
रात्रीं प्रपद्येत[5] सदा शुचिश्चीर्णव्रतो निशि ॥ २० ॥

---

1. ऋ० १०. १०६. 2. ऋ० १०. ११७. 3. ऋ० १०. १२५. 4. ऋ० १०. १२६. 5. ऋ० १०. १२७.

यः कामयेत न पुनर्जायेयमिति योनिषु ।
सहस्रकृत्वो मनसा जपेद्रात्रीति रात्रिषु ॥ २१ ॥
स्थालीपाकेन रात्रीञ्च यजेताहरहर्निशि ।
तन्मना निशि चासीनस्तिष्ठेदहनि धार्मिकः ॥ २२ ॥
ऊर्ध्वं संवत्सराच्चैव चरुं पयसि संस्कृतम् ।
सहस्रकृत्वस्त्वेतेन दिवा होमो विधीयते ॥ २३ ॥
जुहुयान्निशि पूर्वस्मिन् रात्रिभागे समाहितः ।
दिवा चावश्यकं कार्यं छायायामंशुतेजसा ॥ २४ ॥
इति प्रयत आत्मवान्त्सूक्तं तु मनसा जपेत् ।
संवत्सरे तृतीये तु सर्पिषा साधयेच्चरुम् ॥ २५ ॥
अथास्य वरदा देवीं रात्रिर्भवति शर्वरी ।
विज्ञापयीत तां देवीं वरदां स्वयमागताम् ॥ २६ ॥
संवत्सर ऋतौ मासि दिवसेऽस्मिन्क्षणेपि वा ।
प्रयाणकालो भविता तव वत्सेति वत्सला ॥ २७ ॥
रात्रीसूक्तं जपन्नेव तं कालं प्रतिपद्यते ।
न योनिं पुनरायाति सर्वपापैः प्रमुच्यते ॥ २८ ॥
ममाग्ने वर्च[1] इत्येतत्सर्वकामैर्जपेद् द्विजः ।
जुह्वदाज्यमनेनैव सर्वान्कामानवाप्नुयात् ॥ २९ ॥
यां कल्पयन्तीति सदा जपेत नियतव्रतः ।
नैनं कृत्या निर्हिंसन्ति क्रुद्धाभिचरितानि च ॥ ३० ॥
यमङ्गिरसकल्पैस्तु तद्विदोभिचरन्ति सः ।
प्रत्याङ्गिरसकल्पेन सर्वांस्तान् प्रतिबाधते ॥ ३१ ॥
प्रत्यङ्गिरसविद्वांस्तु न रिष्येत कदाचन ।
नैनं कृत्या निर्हिंसन्ति ज्ञाताज्ञातानि यानि च ॥ ३२ ॥
अजानता जानता वा क्रुद्धेनामर्षितेन वा ।
आक्रुष्टं वा दुरुक्तं वा नैनो लिम्पति तद्विदम् ॥ ३३ ॥
एतमेव जपेन्नित्यमृषिं स्वस्त्ययनाय वै ।
सर्वप्रायश्चित्तमेतदभाषत ऋषिः स्वयम् ॥ ३४ ॥

---

1. ऋ० १०. १२८.

स्थावराणां निवेशे तु नगराणां तथैव च ।
ग्रामाणां च गृहाणां च जपेदिममृषिं सदा ॥ ३५ ॥
जातरूपमयं विद्वान् कारयेत् त्रिवृतं मणिम् ।
सहस्रसम्पातहुतमृषिणा तेन तं ततः ॥ ३६ ॥
प्रतिमुञ्चेत शिरसि ग्रीवायामथवोरसि ।
नैनं कृत्या निहिंसन्ति ज्ञाताज्ञातानि यानि च ॥ ३६ ॥
अनेनैव तु सूक्तेन राज्ञां च समलोहितम् ।
कारयेत मणिं विद्वांस्तावदेवानुमन्त्रणम् ॥ ३८ ॥
संग्रामेषु ध्वजाग्राणि वादित्राण्यनुमन्त्रयेत् ।
आसनानि च शय्याश्च यानानि विविधानि च ॥ ३६ ॥
तस्याभिचरतः साक्षादङ्गिरसोप्यृषेः स्वयम् ।
प्रत्यङ्गिरसकल्पेन सर्वं तत्प्रतिबाधते ॥ ४० ॥
अमानुषीरभिचरेत् कृत्यासूक्तं जपन्निदम् ।
मुच्यते सर्वतोनिष्टात् किम्पुनर्मानुषाद् भयम् ॥ ४१ ॥
तपस्वी नियतो दान्तः प्रयोक्ता चेद् भवेद् ऋषिम् ।
सर्वं तरति शान्तात्मा तपो हि सुमहद् बलम् ॥ ४२ ॥
आयुष्यमायुर्वर्चस्यं सूक्तं दाक्षायणं महत् ।
अलङ्कारं हिरण्यं वा प्राप्य दाक्षायणं जपेत् ॥ ४३ ॥
प्रायश्च श्रियमादत्ते बहु चान्नं समश्नुते ।
भाववृत्ते परे सूक्ते[1] सप्तर्चे पावने जपेत् ॥४४॥
प्रजापतिं नमस्कृत्वा सर्वान्कामानवाप्यते ।
नासदासीदिति[2] जपेज्जुहुयाद् योगतत्परः ॥४५॥
प्रजापतेस्तु सायोज्यं द्वादशाब्दैः समश्नुते ।
उत देवा[3] इति जपेदामयावी यतव्रतः ॥४६॥
घृतकुम्भं निधायाथ जुहुयाज्जातवेदसि ।
कुम्भात्सम्पातमन्यस्मित्कांस्ये पात्रे निधापयेत् ॥४७॥
यन्न पानं न चान्नं स्यात् स इदं सम्प्रकल्पयेत् ।
तेनाज्येनाङ्गमभ्यज्य शनकैरन्नभाग् भवेत् ॥४८॥

---

1. ऋ० १०. १२६–१३०. 2. ऋ० १०. १२६. 3. ऋ० १०. १३७.

रोगार्तस्याप्यनेनैव गात्रमङ्क्त्वा जपेदिदम् ।
अजीर्णान्नोप्यजयीत सुखं भवति तेन ह ॥४९॥
अग्ने अच्छा[1] वदेत्येतद् धनकामः प्रयोजयेत् ।
नियतः सर्पिषा हुत्वा जपेदयुतशः पुनः ॥५०॥
खादिरीणां हि समिधां जुहुयाद् दशतीर्दश ।
दशकृत्वः सदारेण रायस्पोषेण पुष्यति ॥५१॥
बिल्वोदुम्बरपालाशीस्तथा रौहितकीश्च याः ।
जुहुयाद् धनकामस्तु रायस्पोषेण पुष्यति ॥५२॥
बैभीदकेध्मो बैल्वकीर्जुहुयादर्द्धमासभुक् ।
द्विषद्द्वेषेण तस्यान्ते सूक्तमेतत्प्रयोजयेत् ॥५३॥
द्विषन्तं धनिनं हत्वा द्विषतो विन्दते धनम् ।
अथवा जप्यमेव स्याद्रायस्पोषधनार्थिना ॥५४॥
अयमग्ने जरितेति[2] जपेदग्निभये सति ।
विधिना तर्पयित्वाग्निं पयोदधिघृतादिभिः ॥५५॥
स्वयं पातुं यावदिच्छेत्तावद्गत्वा चतुर्दिशम् ।
अपामिदं परिणयेत्सन्ततोदकधारया ॥५६॥
उदह्रद इव भूत्वा अग्नेर्भेषजमन्तिकात् ।
अरण्यमेत्य पाटान्तु क्रीणीयाद् यवमुष्टिना ॥५७॥
यदि सौम्यसि सोमाय त्वा परिक्रीणाम्योषधिम् ।
यदि वारुण्यसि वरुणाय त्वा परिक्रीणाम्यहं ततः ॥५८॥
वसुभ्योऽथवा रुद्रेभ्य आदित्येभ्योऽथवा पुनः ।
वैश्वदेव्यसि विश्वेभ्यः परिक्रीणाम्यहं ततः ॥५९॥
क्षिप्त्वा सुमनसः पूर्वमोषध्या सह वीरुधैः ।
तस्या वीर्यं समादत्ते कर्म यत्र करिष्यति ॥६०॥
तां तु मध्ये निदधीत ओषधीनां विहायसि ।
ग्रहणे त्वौषधीनां तु सर्वत्रैष विधिर्भवेत् ॥६१॥
उत्खापयीत तां पाटां त्विमामिति जपन्निह ।
प्रातश्च पेषयेदेनां संसदि ब्रह्मचारिणा ॥६२॥

1. ऋ० १०. १४१. 2. ऋ० १०. १४२.

तदलाभे व्रतवता कन्यया ब्राह्मणेन वा ।
प्रातः शुचिस्तां घृतेन त्रिः पिबेदनुमन्त्रिताम् ॥६३॥
इमामिति[1] तु सूक्तेन शतकृत्वो दशावरम् ।
सपत्नीं बाधते तेन पतिश्चातीव मन्यते ॥६४॥
पतिस्तु परिजप्यैनां पाटामेतेन वै पिबेत् ।
पयसा सप्तरात्रं तु सपत्नान्प्रतिबाधते ॥६५॥
मूलमन्त्रजपैरन्यैर्या पतिं जेतुमिच्छति ।
अलोका यमलोकस्था मज्जते नरके हि सा ॥६६॥
अन्यथा वोपनीतानि चूर्णमूलौषधान्यपि ।
विनाशयेयुः पुरुषं तस्मान्नान्यं समाचरेत् ॥६७॥
प्रियंवदा भर्तरि या भर्ता यस्याः परायणम् ।
वाक् चैव मधुरा यस्याः पत्युः संवननं महत् ॥६८॥
प्रियं भर्त्तारमासाद्य पिबेदेवौषधीमिमाम् ।
प्रियंवदां धर्मपरां धर्मपत्नीमनिन्दिताम् ॥६६॥
अवमन्येत यो मोहात्तमाहुः पुरुषाधमम् ।
अरण्यानीत्यरण्येषु[2] जपेत्सूक्तमनेकशः ॥७०॥
अरण्यानीं नमस्कृत्वा सोऽरण्यात्प्रतिमुच्यते ।
श्रद्धासूक्तं[3] जपेन्नित्यं श्रद्धाकामः समाहितः ॥७१॥
सर्वत्र लभते श्रद्धां मेधासूक्तं तथैव च ।
ब्राह्मीमासाद्य सूक्ते द्वे जपेत नियतव्रतः ॥७२॥
तां पिबेत्तु यथाशक्त्या त्र्यहात्सिद्धिं नियच्छति ।
शङ्खपुष्पीं तु पयसा ब्राह्मीपुष्पाणि सर्पिषा ॥७३॥
शतावरीं तु पयसा वचामद्भिर्घृतेन वा ।
सूक्ताभ्यामनुमन्त्र्याभ्यामेकैकां तु त्र्यहं पिबेत् ॥७४॥
श्रद्धां मेधां स्मृतिं पुष्टिं बलं लक्ष्मीं च विन्दति ।
सिद्धिं प्राप्नोति च परां दीर्घं चायुः समश्नुते ॥७५॥
अथवा मनसा ध्यायेत्सूक्ते सिद्धिं नियच्छति ।
शास इत्था सपत्नघ्नं संग्रामं विजिगीषतः ॥७६॥

---

1. ऋ० १०. १४५. 2. ऋ० १०. १४६. 3. ऋ० १०. १५१.

प्रयोक्तव्यं तु शुचिना जुहुयात्तत्र सिद्धये ।
अथवा जप्यमेव स्यात्संग्राममभिगच्छतः ॥७७॥
शास इत्थेति[1] यो हन्तुं शत्रून् सर्वान्निवारयेत् ।
अलक्ष्मीनाशनार्थं तु जपेन्नित्यं शिरिम्बिठम्[2] ॥७८॥
अपामार्गमयीं शाखां सदर्भां सहवीरणाम् ।
गृहीत्वाऽऽत्मानं पावयेदधश्चोर्ध्वं च नित्यशः ॥७९॥
आज्यं चानेन जुहुयात्सहस्रं दशतीर्दश ।
त्र्यहेण नुदते देहादलक्ष्मीं शतवार्षिकीम् ॥८०॥
चान्द्रायणं चरन्नेतत्सूक्तं सिद्धिकरं जपेत् ।
अलक्ष्मीं नुदते देहादपि वर्षसहस्रिकीम् ॥८१॥
गृहीतं यक्ष्मणा दर्भान् गृहीत्वा संस्पृशन् जपेत ।
मुञ्चामि त्वा हविषेति[3] यक्ष्माणमपकर्षति ॥८२॥
समिद्धमग्निं जुहुयादाज्येनैव यथाविधि ।
सम्पातमाज्ये निनयेत्सम्पातैश्च पयः पिबेत् ॥८३॥
सम्पातभाजने सर्पिश्चूर्णं तत्र निधापयेत् ।
तत्रास्य भोजनीयं स्यात्पानीयं चानुमन्त्रितम् ॥८४॥
खादिराणि तु काष्ठानि चूर्णं कृत्वा सहाम्बुभिः ।
साधयीत रसं चैषां मध्वाज्याभ्यां पिबेत्सह ॥८५॥
मुञ्चामि त्वा हविषेति तत्र तत्र प्रयोजयेत् ।
यक्ष्माणमपकर्षति शरीरात्तेन कर्मणा ॥८६॥
यस्या गर्भः प्रमीयेत तत्राग्नौ जुहुयाद्धविः ।
ब्रह्मणाग्निः सं विदान[4] इत्याज्येन यथाविधि ॥८७॥
आज्यशेषेण चाभ्यज्य गर्भिणी प्रसवेत्ततः ।
पिबेदेवाज्यशेषं तु जीवंस्तस्याः प्रजायते ॥८८॥
जातानि चेत्प्रमीयेरन्नाज्यं कृत्वानुमन्त्रितम् ।
ब्रह्मणाग्निरिति[4] हुत्वा सम्पातान्निनयेद् मणौ ॥८९॥
मणिं तु त्रिवृति सूत्रे वासयेद्वाससा सह ।
न्यग्रोधशुङ्गया तत्र शुक्ललोहितवेष्टितम् ॥९०॥

1. ऋ० १०. १५२. 2. ऋ० १०. १५५. 3. ऋ० १०. १६१. 4. ऋ० १०. १६२.

तं सावित्र्ययुतेनाथ अनुमन्त्र्य यथाविधि ।
सम्पातैरयुतेनैव ब्रह्मणेति च संस्तुतम् ॥९१॥
उपरिष्टाच्च सावित्र्या तावदेवानुमन्त्रणम् ।
सर्वैः स्वस्त्ययनैश्चैतज्जपेदभिहुतं मणिम् ॥९२॥
शिरसा धारयेन्नारी प्रयता गर्भिणी सती ।
तृतीये गर्भमासे तु मणिमेतं समासजेत् ९३॥
पुष्यन्ती शरदं नारी गौः सवत्सा वसेद् यथा ।
बहुपाणीययवसा वत्सेन पिबता सह ॥ ९४ ॥
जातस्य तु कुमारस्य कण्ठे तं मणिमासजेत् ।
आज्यशेषं पुरस्कृत्य तमभ्यज्य कुमारकम् ॥ ९५ ॥
हुत्वा स्वस्त्ययनैरेव स्त्री पुमांसं प्रसूयते
ऊर्ध्वं वर्षात्स्वस्त्ययनं पुनरेव विधीयते ॥ ९६ ॥
पुरा स्तनप्रदानात्तं श्रद्धासूक्तेन पाययेत् ।
मेधासूक्तेन चैवैनं पिष्टं व्रीहिमयं चरुम् ॥ ९७ ॥
मधुमिश्रं जातरूपं मेधावी तेन जायते ।
शतं वर्षाणि जीवेत म्रियते न पुरायुषः ॥ ९८ ॥
स्मृतमेव च तस्य स्यात्षण्मासाच्च ततः परम् ।
आज्यं संस्कृत्य जुहुयादक्षीभ्यां त[1] इति द्विजः ॥ ९९ ॥
पाणिना तु घृताक्तेन मूर्धानं संस्पृशेत्ततः ।
कर्णौ नेत्रे च छुबुकं नासिके चैव संस्पृशेत् ॥ १०० ॥
एतदेव जपेन्नित्यं यक्ष्मणो विप्रमुच्यते ।
पूर्वोक्तेनैव कल्पेन यक्ष्मनाशनमाचरेत् ॥ १०१ ॥
होमेन च जपैश्चैव यक्ष्मनाशनमाचरेत् ।
अपेहीति[2] जपेत्सूक्तं शुचिर्दुःस्वप्ननाशनम् ॥ १०२ ॥
देवाः कपोत[3] इति तु कपोतस्योपवेशने ।
सूक्तेन जुहुयादाज्यं यमदूतं हि तं विदुः ॥ १०३ ॥
सपत्नघ्नं प्रयुञ्जीत ऋषभं[4] जपहोमयोः ।
येने[5](? तुभ्ये)दमिति वै नित्यं जपेत नियतव्रतः ॥ १०४ ॥

---

1. ऋ० १०. १६३. 2. ऋ०. १०. १६४. 3, ऋ० १०. १६५. 4. ऋ० १०. १६६. 5. १०. १६७.

समाधिं मनसस्तेन विन्दते नैव मुह्यति ।
मयोभूर्वात[1] इति तु गवां स्वस्त्ययने जपेत् ॥ १०५ ॥
यवांश्चैव घृताभ्यक्तान् कारीषेऽग्नौ समाहितः ।
जुहुयाद्गोष्ठमध्ये तु दधिमध्वाज्यसंस्कृतान् ॥ १०६ ॥
राजानमभिषिञ्चेत तिष्येण श्रवणेन वा ।
पौष्णासावित्रसौम्याश्विरोहणीपूत्तरासु च ॥ १०७ ॥
हुत्वाग्निं राजलिङ्गाभिः सावित्र्या प्रयतः शुचिः ।
महाव्याहृतिभिश्चैव सम्पाताभिहुतो भवेत् ॥ १०८ ॥
सर्वौषधिरसैः श्लक्ष्णैर्नदीनां सलिलेन च ।
व्याघ्रचर्मण्यथासीनमासन्द्यामभिषिच्य तम् ॥ १०९ ॥
तिष्ठन्प्रत्यङ्मुखो ब्रूयाज्जय त्वं पृथिवीमिमाम् ।
धर्मस्ते निखिलो राजन् वर्द्धतां पालय प्रजाः ॥११०॥
वर्द्धस्व त्वं श्रियै पुष्ट्यै जयायाभ्युदयाय च ।
राजानः सन्तु ते गोत्रे ततोऽप्रतिरथं[2] जपेत् ॥१११॥
वैयाघ्रं तु भवेच्चर्म समिदौदुम्बरी भवेत् ।
त्रिरेनमभिषिच्यैवं दुन्दुभीनभिमन्त्रयेत् ॥११२॥
प्राच्यां त्वा दिशि वसवो अभिषिञ्चन्तु तेजसे ।
दक्षिणस्यां त्वा दिशि रुद्रा अभिषिञ्चन्तु वृद्धये ॥११३॥
प्रतीच्यां त्वा दिश्यादित्या अभिषिञ्चन्तु पुष्टये ।
विश्वे देवा उदीच्यां तु अभिषिञ्चन्तु श्रेयसे ॥११४॥
अभिषिच्य च राजानमाशीर्भिरभिनन्द्य च ।
आ त्वाहार्षमन्तरेधीत्य[3]थैनमभिमन्त्रयेत् ॥११५॥
पतङ्गमिति[4] नित्यं तु जपेद्ग्ज्ञानभेदनम् ।
मायाभेदनमेतद्धि सर्वमायाः प्रबाधते ॥११६॥
शाम्बरीमिन्द्रजालां वा मायामेतेन वारयेत् ।
अदृष्टानां च सत्त्वानां मायामेतेन बाधते ॥११७॥
त्यमू[5] ष्विति स्वस्त्ययनं जपेत नियतव्रतः ।
पुष्पं दृष्ट्वा तु या गर्भं न गृह्णीयाद् वयोन्विता ॥११८॥

---

1. ऋ० १०. १६९. 2. ऋ० १०. १०३. 3. ऋ० १०. १७३. 4. ऋ. १०. १७७. 5. ऋ० १०. १७८.

[1] विष्णुर्योनिं नेजमेष योनिं स्पृष्ट्वा ततो जपेत् ।
महि त्रीणामवो[2]ऽस्त्विवति पथि स्वस्त्ययने जपेत् ॥११९॥
[3] प्राग्नयेऽथ द्विषद्द्वेष्यं जपेद् द्वेषस्य निष्कृतिम् ।
आयं गौः[4] सार्पराज्ञीस्तु सर्पानेतेन बाधते ॥१२०॥
पवित्राणां पवित्रन्तु जपेदेवाघमर्षणम्[5] ।
अपः प्रविश्य यश्चैतत् त्रिः पठेत् सुसमाहितः ॥१२१॥
यथाश्वमेधावभृथस्तादृशं मनुरब्रवीत् ।
अप्सु चैव निमज्जित्वा त्रिः पठेदघमर्षणम् ॥१२२॥
यथाश्वमेधावभृथ एवं तदृषिरब्रवीत् ।
यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः ॥१२३॥
तथाघमर्षणं सूक्तं सर्वपापापनोदनम् ।
सेनादारण्यमेतत्स्यान्नैर्हस्त्यमिति शौनकः ॥१२४॥
मनसा ध्येयमेतत्तु मन्यते शौनकस्त्वृषिः ।
सं समिद्युवसे[6] वृषन्सौभ्रातृकरणं महत् ॥१२५॥
ज्ञातिभेदे प्रयुञ्जीत न भिद्यन्ते कदाचन ।
कृते भेदे तु संज्ञानमेतत्सन्धिकरं जपेत् ॥१२६॥
न तत्र भेदो भूयः स्याद् यत्रैतत्सततं जपेत् ।
तच्छं योरावृणीमह इति स्वस्त्ययनं जपेत् ॥१२७॥
महानाम्न्यः परं ब्रह्म शुक्रं ज्योतिः सनातनम् ।
सपत्नघ्न्यश्च पुण्याश्च पावमान्यः पराः स्मृताः ॥१२८॥
वृष्टिकामो जपेच्चैता आपो हि ष्ठाः सनातनाः ।
ओंकारपूर्वा व्याहृतयो मधुच्छन्दस आदितः ॥१२९॥
सूक्तान्यन्ते महानाम्न्यः संहिता सामृता स्मृता ।
अमृतत्वं ययुर्देवाः पूर्वं संहितयानया ॥१३०॥
जपन्नेतां शुचिर्नित्यममृतत्वं स गच्छति ।
अत्रैव त्वावपेन्मध्ये पितृसूक्तान्यनेकशः ॥१३१॥
पित्र्यां तां संहितां विद्यात् पितॄन् प्रीणाति चैतया ।
एवमेव समाहृत्य वासवी संहिता भवेत् ॥१३२॥

---

1. ऋ० १०. १८४. 2. ऋ० १०. १८५. 3. ऋ० १०. १८७. 4. ऋ० १०. १८९. 5. ऋ० १०. १९०. 6. ऋ० १०. १९१.

रौद्रादित्या वैश्वदेवी यद्देवत्यां च कामयेत् ।
कुर्वीत वास्तुशमनं मध्ये गोष्ठस्य धर्मवित् ॥१३३॥
पुष्पैर्गन्धैश्च माल्यैश्च वानस्पत्यैस्तथौषधैः ।
वास्तु सर्वं प्रतिकिरेत्सप्त धान्यैस्तथैव च ॥१३४॥
वास्तोष्पतिं यजेच्चात्र पायसेन बृहस्पतिम् ।
औदुम्बरपालाशैस्तु बलिं प्रतिदिशं हरेत् ॥१३५॥
सूर्यो वायुर्यमः पितरो वरुणो निर्ऋतिस्तथा ।
सोमो महेन्द्र इत्येते दिक्षु वै देवताः स्मृताः ॥१३६॥
दद्याद् दानं ब्राह्मणेभ्यः शिवं भवति वास्तुनि ।
प्रतिसंवत्सरं कार्यं गृहे वै गृहमेधिना ॥१३७॥
यद्येवं सविधं चान्यदनुक्तमपि किञ्चन ।
अग्निमिन्द्रमथो वायुं सूर्यमन्याश्च देवताः ॥१३८॥
आरिराधयिषुर्यां यामभिधावेत तां च ताम् ।
अभिरूपेण सूक्तेन यथादिष्टं प्रयोजनम् ॥१३९॥
ऋषीणां मन्त्रदृष्टेन प्रत्यक्षा सिद्धिरिष्यते ।
सर्वत्र दक्षिणां दद्याद् धनं वा कर्मसिद्धये ॥१४०॥
न त्वेवादक्षिणं कर्म किञ्चिदस्तीति शौनकः ।
शक्त्या हि पूर्णपात्रेण सम्मिताप्यन्ततो भवेत् ॥१४१॥
तस्मात्स्वल्पापि दातव्या दक्षिणा कर्मसिद्धये ।
ऋषभैकादशा दद्याद् येन वा तुष्यते गुरुः ॥१४२॥
धर्मज्ञे सत्यवादिनि ब्रह्मदानं च दीयते ।
तदिदं परमं ब्रह्म गुह्यं पावनमद्भुतम् ॥१४३॥
नाप्रशान्ताय दातव्यं नापुत्रायातपस्विने ।
नासंवत्सरोषिताय नाशिष्यायाहिताय च ॥ १४४ ॥

नमः शौनकाय ! नमः शौनकाय !

इत्यृग्विधाने चतुर्थोऽध्यायः ।

---

# पञ्चमोऽध्यायः ।

नराणां भाग्यहीनानामृग्विधानमजानताम् ।
ऋग्वेदः कल्पवृक्षोयं फलं नैव प्रयच्छति ॥ १ ॥
रत्नगर्भ इवावास ऋग्वेदः प्रतिभाति मे ।
ऋग्विधानप्रदीपेन विना नैव प्रकाशते ॥ २ ॥
रत्नाकर इवोदार ऋग्वेदोऽत्यन्तदुस्तरः ।
ऋग्विधानमहापोतं विना नैव फलप्रदः ॥ ३ ॥
निधानं सर्वरत्नानामृग्वेदो ब्रह्ममन्दिरम् ।
ऋग्विधानविधानेन ध्रुवमेतदवाप्यते ॥ ४ ॥
ऋग्वेदः पठितो ह्येष नृणां भवति निष्फलः ।
ऋग्विधानं विना तस्मादध्येयं तत्प्रयत्नतः ॥ ५ ॥
सूक्ततत्त्वार्थकथनमृग्विधानमवैति यः ।
ऋग्वेदो जायते तस्य प्रसादात्फुल्लमानसः ॥ ६ ॥
आयुष्यं सम्पदो मूलं सर्वकल्मषनाशनम् ।
ऋग्विधानाभ्यनुष्ठानं शुभ्रकीर्त्तिकरं परम् ॥ ७ ॥
ऋग्विधानेन संयुक्तमृग्वेदं वेत्ति यो द्विजः ।
धर्मार्थकाममोक्षाणामाश्रयः स भवेद् ध्रुवम् ॥ ८ ॥
वेदेषु प्रथमो वेद आयुर्वेदनिधिः प्रभुः ।
ऋग्विधानसदाभ्यासादतीव परितुष्यति ॥ ९ ॥
शत्रुनाशं मनस्तुष्टिं सुहृज्जनसमागमम् ।
ऋग्वेदः प्रयन्ता नित्यमृग्विधानेन तोषितः ॥ १० ॥
ऋग्वेदं वेत्ति यः साङ्गमृग्विधानरतः सदा ।
मनोरथादप्यधिकं भवेत्तस्य समीहितम् ॥ ११ ॥
कुले जन्मनि शीले वा प्रज्ञायामुद्यमेपि च ।
ऋग्विधानपरिज्ञानादुशन्ति चरितार्थताम् ॥ १२ ॥
तुष्यन्ति देवताः सर्वाः सम्पद्यन्ते विभूतयः ।
दुराधयः प्रणश्यन्ति नित्यमृग्विधिपाठिनाम् ॥ १३ ॥

नमः शौनकाय ! नमः शौनकाय !

इत्यृग्विधाने पञ्चमोऽध्यायः ।

ऋग्विधानं समाप्तम् ।

# ग्रन्थान्ते लेखकपद्यानि

यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥
आर्षं यो (वि) लिखित्वा तु ब्राह्मणेभ्यः प्रयच्छति ।
पितरस्तस्य वैकुण्ठे वसन्त्यक्षरसङ्ख्यया ॥
भग्नपृष्टिकटिग्रीवाबद्धमुष्टिरधोमुखम् ।
कष्टेन लिखितं चेदं यत्नेन परिपालयेत् ॥
तैलाद्रक्षेज्जलाद्रक्षेद् रक्षेच्छिथिलबन्धनात् ।
परहस्ते गतां रक्षेदेवं वदति पुस्तिका ॥

---

# ऋग्विधानस्थपद्यपादानामकारादिक्रमेण सूची

Digitized by eGangotri and Sarayu Trust.

---

ऋ० ७. १=ऋग्वि० २. १३०[3]; २. १७०[4]
ऋ० ७. ५=ऋग्वि० २. १३१[1]
ऋ० ७. ६=ऋग्वि० २. १३१[1]
ऋ० ७.७=ऋग्वि० २. १३१[1]
ऋ० ७. १५. १३=ऋग्वि० २. १३४[2]
ऋ० ७. ३२. २२-२३=ऋग्वि० २. १३५[1]
ऋ० ७. ३२. २६-२७=ऋग्वि० २. १३६[1]
ऋ० ७. ३५=ऋग्वि० १. १६[3]; २. १३६[1]
ऋ० ७. ४१=ऋग्वि० २. १३७[1]; २. १४०[2]
ऋ० ७. ४६=ऋग्वि० २. १४१[1]
ऋ० ७. ४९=ऋग्वि० २. १४२[3]
ऋ० ७. ५१=ऋग्वि० २. १४३[1]
ऋ० ७. ५२=ऋग्वि० २. १४३[1]
ऋ० ७. ५४=ऋग्वि० २. १४४[1]
ऋ० ७. ५५=ऋग्वि० २. १४५[1]
ऋ० ७. ५५. १=ऋग्वि० २. १४७[1]
ऋ० ७. ५९. १२=ऋग्वि० २. १४९[2]
ऋ० ७. ६६. १६=ऋग्वि० २. १५०[1]
ऋ० ७. ७५. ८०=ऋग्वि० २. १५१[3]
ऋ० ७. ८८. ७=ऋग्वि० २. १५३[1]
ऋ० ७. ८९. ५=ऋग्वि० २. १५६[3]
ऋ० ७. ९९=ऋग्वि० २. १५९[3]
ऋ० ७. १००=ऋग्वि० २. १५९[3]
ऋ० ७. १०१= }
ऋ० ७. १०२= } ऋग्वि० २. १६०[3]
ऋ० ७. १०४=ऋग्वि० २. १६३[1]
ऋ० ८. ११=ऋग्वि० २. १६४[4]
ऋ० ८. १६=ऋग्वि० २. १६५[1]
ऋ० ८. १८. ९=ऋग्वि० २. १६७[1]
ऋ० ८. २१. १८=ऋग्वि० २. ७४[3]

ऋ० ८. ३०=ऋग्वि० २. १६८[1]
ऋ० ८ ३४. १६-१८=ऋग्वि० २. १६९[1]
ऋ० ८. ३२-४५=ऋग्वि० २ १७.[1]
ऋ० ८. ३५=ऋग्वि० २. १७३[1]
ऋ० ८. ४४=ऋग्वि० २. १७४[3]
ऋ० ८. ४४. ३=ऋग्वि० २. १३४[1]
ऋ० ८. ४५=ऋग्वि० २. १७५[4]
ऋ० ८ ४६-४७=ऋग्वि० २. १७७[3]
ऋ० ८. ४७. १४-१८=ऋग्वि० २. १७८[1]
ऋ० ८. ४८. ४-५=ऋग्वि० २. १७८[3]
ऋ० ८. ५०. १३-१८=ऋग्वि० २. १८०[3]
ऋ० ८. ५३=ऋग्वि० २. १८२[1]
ऋ० ८. ५६=ऋग्वि० २. १८३[1]
ऋ० ८. ५९. ५-६=ऋग्वि० २. १८३[3]
ऋ० ८. ६०=ऋग्वि० २. १८४[3]
ऋ० ८. ७०=ऋग्वि० २. १८५[3]
ऋ० ८. ८०=ऋग्वि० २. १८६[3]
ऋ० ८. ८२. ४=ऋग्वि० २. १८७[3]
ऋ० ८.८४.७-९=ऋग्वि० १. १६[2]; १.५५[3]
ऋ० ८. ८९.१०—११ ऋग्वि० २.१८८[3]
ऋ० ८. ९०. ११-१२. ऋग्वि० २. १८९[3]
ऋ० ८. ९०. १३. ऋग्वि० २. १९०[4]
ऋ० ८. ९०. १४=ऋग्वि० २. १९१[3]
ऋ० ८. ९०. १५=ऋग्वि० २. १९२[1]
ऋ० ८. ९०. १६=ऋग्वि० २. १९२[3]
ऋ० ९=ऋग्वि० १.१६[4]; १.५५[4]; २.१९३[1]
ऋ० ९. १-६७=ऋग्वि० ३. १[1]
ऋ० ९. ११=ऋग्वि० १. ५३[4]
ऋ० ९. ५८=ऋग्वि० ३. ७[3]

| | | | |
|---|---|---|---|
| ऋ० १०. १५५=ऋग्वि० | ४. ७८$^{4}$ | ऋ० १०. १७७=ऋग्वि० | ४. ११६$^{1}$ |
| ऋ० १०. १६१=ऋग्वि० | ४ ८२$^{3}$ | ऋ० १० १७८=ऋग्वि० | ४. ११८$^{1}$ |
| ऋ० १०. १६२=ऋग्वि० | ४ ८७$^{3}$ | ऋ० १०. १८४=ऋग्वि० | ४. ११९$^{1}$ |
| ऋ० १०. १६३=ऋग्वि० | ४. ९९$^{4}$ | ऋ० १०. १८५=ऋग्वि० | ४ ११९$^{3}$ |
| ऋ० १०. १६४=ऋग्वि० | ४. १०२$^{3}$ | ऋ० १०. १८६-१९१=ऋग्वि० | २. १७०$^{3}$ |
| ऋ० १०. १६५=ऋग्वि० | ४. १०३$^{1}$ | ऋ० १०. १८७=ऋग्वि० | ४. १२०$^{1}$ |
| ऋ० १०. १६६=ऋग्वि० | ४. १०४$^{2}$ | ऋ० १०. १८९=ऋग्वि० | ४. १२०$^{3}$ |
| ऋ० १०. १६७=ऋग्वि० | ४. १०४$^{3}$ | ऋ० १०. १९०=ऋग्वि० | १ १६$^{2}$; १. ५५$^{4}$; ४. १२१$^{2}$ |
| ऋ० १०. १६९=ऋग्वि० | ४. १०५$^{3}$ | | |
| ऋ० १०. १७३=ऋग्वि० | ४. ११५$^{3}$ | ऋ० १०. १९१=ऋग्वि० | ४. १२५$^{3}$ |

———



